श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला, स. ३७

सपादक —श्रीपरवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.

श्री

# साहित्यसारः

सर्वेश्वरकविविरचितः

( नाट्यलक्षणात्मकः )

---

श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयप्रधानसस्कृतविमर्शकेन

श्री मानवल्लि रामकृष्णकविना, एम्. ए. उपाधिभाजा

संपादितः

श्रीवेङ्कटेश्वरप्राच्यमहाविद्यालयव्याकरणोपाध्यायेन

कौत्सेन अप्पल्ल सोमेश्वरशर्मा, P. O L. इत्यनेन

संघटितोपोद्धातः

---

श्रीतिरुमल-तिरुपति देवस्थानमुद्रणालये-मुद्रित.

तिरुपति

१९५२

# PREFACE

— o —

The present work of *Sāhityasāra* was taken up for editing by the Reader in Sanskrit in the Institute, Mr M Ramakrishnakavi, M A in 1945 and the press copy was ready by the end of that year But the publication of the work had to be deferred as the press and the editor were engaged in the more important work of printing and editing the *Bharatakośa* As soon as this work was published, *Sāhityasāra* was taken up But as soon as the printing of this work had been completed Mr M Ramakrishnakavi had unfortunately to retire and as he did not write the introduction by that time, the work could not be published immediately I have, therefore, requested one of the Lecturers of the Oriental College, Mr A Someśwaraśarma, Vyākarana-Sāhitya Vidyāpravīna, to write the introduction and supply the want. I am very grateful to him for providing the edition with his introduction in Sanskrit

On reference to Mr M Ramakrishnakavi as to his opinion about the age of the author, he sent me the following note —

> '*Sāhityasāra* was composed by the end of the eleventh century, for the date of Vamarāśimuni is determined He constructed a temple at about 10 miles on the northern side of the Tungabhadra near Kurnool There are inscriptions one of which presents the fact that Vāmarāśi managed the construction of the temple"

As he had given no reference to the inscriptions to trace them, I addressed the Government Epigraphist for India, Ootacamund and requested him to inform me when the said inscription or inscriptions were published and whether the place referred to lay in the Kurnool district I am

reproducing below a letter received by me from the Superintendent for Epigraphy, Mr N Lakshminarayanarao, M A

> "Subsequent to my writing to you last month, I have traced out a Vāmarāśideva He is mentioned in a Kannada inscription at the village of Kolūr in the Karajgi (Haveri) Taluk of the Dhārwār district in Bombay state Such epithets as *yama-niyama-dhyāna-dhārana-maunānusthāna* etc, are applied to him in the record His *śishya* Mallikarjuna-bhatta (or bhattāra) is stated to have received a gift for the God Kālīdeveśvara at Kolūr in the Śaka year 967 This village lies about 20 miles to the west of the Tungabhadra river, though not to the north of it I am not sure, however, whether Vāmārāśideva of the Kolūr inscription is the same as Vāmarāsi Muni mentioned in your letter The inscription is published on pages 180ff of volume XIX of Epigraphia Indica

Mr A Someswarasarma in his Sanskrit introduction discussed the age of the author in the light of the above facts and also the value of the work Mr Ramakrishnakavi adds in his note that the present author seems to have written another work called *Kāvyasāra*

I have to express my obligation to the Government Epigraphist for India for taking the trouble to supply me the information about Vāmarāśideva

S V O INSTITUTE
TIRUPATI
17–12–52.

P V RAMANUJASWAMI,
*Director*

श्री

श्रीनिवासो विजयते ॥

# परिचयः



## १, संपादकः

प्रख्याताः शताधिकान्धगीर्वाणग्रन्थसपादकाः परिशोधकवराश्च श्रीमान-वल्ल्युपाह्व रामकृष्णकवय एव अमु साहित्यसारमपि समपादयन् । ते हि बहुग्रन्थ-द्रष्टार. लब्धप्रतिष्ठाश्चेति न तान् प्रत्यत्र प्रस्तोतव्य बहु वर्तते । परं वार्धकेऽपि द्वादश हायनानि श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालये सस्कृतप्रधानविमर्शकपदवीम-धिष्ठाय अस्मिन्नेव वर्षे आषाढमासे ततो विश्रान्तिमापन्नित्येव सांप्रत वचः । कृतिमिमा कुतः – कदा – कथच – ते सपादयामासुरित्यादिशङ्कास्तु तदेकसमाधे-या अवशिष्यन्ते ।

## २. कविः

ग्रन्थस्याऽस्य प्रणेता सर्वेश्वरकविरिति "सर्वेश्वरइति ख्यातः कविर्जयति भूतले – – – तेन साहित्यसारोऽसौ" इत्यादिवचनैः विशदमेव जानीम· । कविमधिकृत्यच — "भूतले सर्वेश्वरकविर्जयति । स चन्द्रशेखरभक्तः । त्रिविक्र-मस्य सूनु. । अधीती विविधशास्त्रेषु । विशेषतो भारते नाटयशास्त्रे । वामराशि-मुनिरस्य गुरु." इत्येव प्रकृतादवगच्छामः । चतुर्थप्रकाशान्ते विद्यमानं "मलयज-मुनिपुङ्गवेन" इत्यादिपद्यनु कवेरस्य 'मलयजमुनिरिति, नामान्तरमप्यासीदिति विशेषान्तर बोधयति । तदेव प्रणेतु· दाक्षिणात्यता अवसाने मौनित्वच सूचय-तीव । अथाऽपि कदाऽय सर्वेश्वरो जिजीवेति निश्चयच प्रतिपादयितु नोपलभ्यते सरणि. । अत्र कश्चिद्यत्न कृतवन्तोपि वयमफलाः समभूमेति अधस्ताद्वितनिष्यते । सत्यमास्माकीना· कवय. पण्डिताश्च प्राचीना बहवः स्वकृतिषु कालमसूचयित्वा तज्जि-ज्ञासूनाधुनिकान् बहुधा क्लेशयन्तीति नितरा दूयते मन· ॥

## ३. कालः

अत्र काश्चन प्रकारानेव सहृदयाना पुर प्रदर्शयितु पारयामः । तथाहि ‒ " यस्यागस्त्येश्वराधीशो वामराशिमुनिर्गुरु., इति वचनेन वामराशिमुने· कृतिकर्तृगुरुत्वं स्फुटमवभासते किल । वामराशिसमयस्तु निश्चितकल्प. । क्रीस्तुशकस्य १०४५ प्रान्ते वामराशिरय तुङ्गभद्राया उत्तरे तटे देवायतनमेक निरमापयत् । शासनानि च प्रमाणभूतान्युपलब्धानि । अतः सर्वेश्वरः क्रीस्तोः परमेकादशशतकान्ते बन्धमसु व्यररचत् " इति श्रीरामकृष्णकवीनामभिसन्धि. ।

स्यादेतत् । उक्तसवादि शासनमेक सम्यक् परिशीलनेन अभिज्ञातम् । ' कोळूर ' शासनमिति तस्य नाम । कर्णाटभाषामय तत् । तच्च " एपिग्राफिया इण्डिका " इतिग्रन्थस्य ( A Journal of Epigraphy ) एकोनविंशतितमे सपुटे १८० पार्श्वे प्रकाशितम् । तत्र ' वामराशिदेव ' इत्यय ' यमनियमध्यान-धारणमौनानुष्ठानपरायणे ' त्यादिबिरुदविशिष्ट स्तुतो दृश्यते । पर ‒ हन्त ‒ भाति कश्चन विसवादोऽपि । अस्मदपेक्षितो वामराशिमुनि. । तत्रत्यो वामराशिदेवः । उभावभिन्नौ यदि तर्हि युक्त सपद्येत । तथा निश्चेतु न दृढमस्ति प्रमाणम् । अन्यच्च । ' कोळूर ' ग्राम. तुङ्गभद्रायाः पश्चिमतीरे नोत्तर इति बाढ ज्ञायते । किच । शासने शिष्यो मल्लिकार्जुनभट्ट उल्लिखितः । नाऽयमशः प्रकृतमर्थं पुष्णाति ।

केचिदेवमाशेरते । " सर्वेश्वरः क्रीस्तोः परं चतुर्दशशतके जिजीव । कन्याकुमार्यग्रसमीपे (Near Cape Comorin) तस्य निवास आसीत् । ' काव्यसार ' इति ग्रन्थान्तरमप्यनेन विरचितम् " इति । प्रायेण मलबारीयोपज्ञोऽयं कल्पः । अत्राऽपि परिपोषकाणि प्रमाणानि नैवोपलभ्यन्ते ।

सत्येव " भरतकोहलातिरिक्तालङ्कारिकान्तराननुकीर्तनम्, त्रिशदलङ्कारपरिगणनम्, लक्षणादरः, विभ्रमाख्यव्यभिचारिणो विलक्षणस्वरूपप्रदर्शनमित्यादि-ग्रन्थस्यांशे· केवलैरयमतीव प्राचीनो भामहदण्डिनारनन्तरवर्तीत्यप्यनुमातु शक्यत " इति मामकीनः कल्पोऽपि प्रमाणान्तरनिरालम्बा न्यस्यते कुतूहलाय । अपरोऽप्येतादृश आगच्छतु । सर्वत्राऽपि सभावनैव । दार्ढ्यंतु न कस्याऽपि पक्षस्याधातु शक्येत । भवतु । निश्चयलाभपर्यन्त सशय एव हि शरणम् ॥

## ४. ग्रन्थः

एतत्प्रबन्धविषयकचरिताशज्ञानार्थं “क्याटलगस् क्याटलगोरम्” (संस्कृतग्रन्थतत्कर्तृपट्टिका) इति बृहत्कोशो मया व्यलोकि । तत्र ‘साहित्यसार’ नाम्ना त्रयः प्रबन्धा निर्दिष्टाः । तेषु विश्वेश्वरनिर्मितः काव्यरूप एक. । मानसिहविरचित आलङ्कारिको द्वितीयः । कर्तृनिर्देशरहित आलङ्कारिक एव तृतीय । अय सर्वेश्वरीय. साहित्यसार', अच्युतरायकर्तृकत्वेन लोके प्रचलन् अपर साहित्यसारश्च कुतस्तत्र कोशे स्थान नाऽलभतेति स एव कोशघटक' प्रष्टव्य' । ‘त्रिवेण्ड्र’ नगरस्थराजकीयग्रन्थालयेऽस्य तालपत्रप्रतिकृतिश्चकास्तीति तदीय “विपुलग्रन्थसूचिकाया” प्रतीयते । पर साऽपि चरितविषये भग्नहस्त प्रादर्शयत् । अत एव चरिताशपरिशोधने सर्वथा सहायशून्याः सपन्ना इत्यावेदित प्राक् ।

साहित्यसारोऽय केवल नाट्यलक्षणात्मक' । लक्ष्यसगतिरत्र नैवास्ति । सग्रहप्रयोजनक' । “लसन्मृदुपदावल्या बालव्युत्पत्तिकारणम् । क्रियते नाट्यलक्षणम् ।” इत्यनेनेदमेव निवेदित कविना । अस्मिश्च षट् प्रकाशा विलसन्ति । तेषु प्रतिपाद्य यथाक्रममेवं वर्तते :—

प्रथमप्रकाशेः— नाटकप्रकरणादिविभाग । नाटकलक्षणम् । नान्दी-प्रस्तावनादिलक्षणम् । सन्धिसन्ध्यङ्गलक्षणादिकच ।

द्वितीयप्रकाशे'— भारत्यादिवृत्तयः । तदङ्गानि । पददोषाः पञ्च-विशति । वाक्यदोषाः षोडश । वाक्यार्थदोषा सप्त । काव्यगुणा दश । अलकाराः त्रिशच्च ।

तृतीयप्रकाशेः— लक्षणानि षट्त्रिशत् । पात्रसबोधनादिनियमाश्च ।

चतुर्थप्रकाशे — नायकनायिकादूत्यादिभेदाः । तल्लक्षणानिच ।

पञ्चमप्रकाशेः— रसभावादिलक्षणानि ।

षष्ठप्रकाशेः— नाटकप्रकरणादिदशरूपकलक्षणानि । इति ॥

प्रतिपादितं विषयजातं कृत्स्नमपि न स्वोपज्ञमिति "आहृत भरतात्किञ्चित् उत्तरात्किञ्चिदुद्धृतम् । कलित कोहलात्किञ्चित् किञ्चिद्भरतविस्तरात्" इत्यनेन कविरेव आविरकार्षीत् । तथा "अस्य साहित्यसारस्य सख्या सर्वेश कल्पिता । भवेदष्टाधिकैवाऽत्र षट्शती सुमनोहरा" इत्यनेन ग्रन्थस्थश्लोकसख्यापि कविनैव निवेदिता यथायथ विद्यते ।

गीर्वाणवाङ्मये हि सागरतुल्य नाट्यलक्षण भारत नाट्यशास्त्रम् । तदनुसृत्यैव द्वित्राणि सग्रहप्रयोजनानि नाट्यलक्षणानि परस्तादुदितानि । तत्र दशरूपकमतीव प्रसिद्धम् । एव सति अतिसग्रहाभिलाषिणा लक्षणैकप्रवणानामय साहित्यसार. दशरूपकतोऽपि विशिष्य उपयुज्यत इति सुहृद सभावयामि । पठितारश्च अमुमशं स्वयमेव ग्रहीष्यन्तीति नाऽत्रातीव प्रयत्यते ।

## ५. उपसंहारः

ईदृशमल्पमूल्यमधिगुणं ग्रन्थरत्न अमरवाणीसेवकानां मुदे श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयाधिकृताः प्राकाशयन् । अतस्तान् प्रति सहृदयलोकः सदा कृतज्ञो भवेत् ।

मुद्रण सर्वं सपादकाना आध्यक्ष्य एव निर्व्यूढम् । यावत्परिचयरचनायाः समय आगतस्तावदेव सपादकाः श्रीरामकृष्णकवयः पदवीतो विश्रान्ताः । अतस्तद्रचनावकाश श्रीवेङ्कटेश्वरप्राच्यपरिशोधनालयकुलपतय श्रीमन्तः परवस्तु वेङ्कटरामानुजस्वामिपादाः वात्सल्येन मे अदासिषु. । यथाशक्ति तदिद कृत्य निरवहम् । कृतज्ञश्च भवामि सतत कुलपतीन् प्रति । अत्र परिचयलेखने भासमान भ्रमप्रमादादिकं सहृदयवतसाः कृपया क्षमन्तामिति, निर्दोष निर्गुण वाऽपि नास्ति लोके हि किञ्चनेति च विज्ञापयामि ॥

श्रीवेङ्कटेश्वरप्राच्यविद्यालय ।
नन्दनमार्गशीर्षकृष्णदशमी
तिरुपति ।
क्री. श. ११–१२–१९५२,

विबुधविधेय,
"व्याकरणसाहित्यविद्याप्रवीणः, भाषाप्रवीणश्च"
**अप्पल्ल - सोमेश्वरशर्मा, P. O. L.**
**व्याकरणोपाध्यायः**

श्री

महाकवि सर्वेश्वर विरचित.

# साहित्यसारः

सुरासुरशिरःश्रेणीरत्नराजिविराजितम् ।
वन्देऽहं वासुदेवाङ्घ्रिवरपङ्केरुहद्वयम् ॥ १ ॥

सदा मृदुपदन्यासास्सालङ्कारा रसावहा ।
प्रगल्भा इव कामिन्यो जयन्त्यादिकवेर्गिरः ॥ २ ॥

जयन्ति भुवने सन्तः सदा सन्तापहारिणः ।
निजवक्त्रेन्दुनिर्गच्छदच्छवाक्यामृतद्रवैः ॥ ३ ॥

विनापि कारणेनोच्चैर्विसरद्वैरदारुणात् ।
दुर्जनाद्भीतिरत्यर्थं कस्य वा नोपजायते ॥ ४ ॥

अशेषख्यातसाहित्यसारनिष्णातमानसः ।
सर्वेश्वर इति ख्यातः कविर्जयति भूतले ॥ ५ ॥

मनोमन्दरमन्थानमथिताद्भरताम्बुधेः ।
यस्याजनि जनानन्दी ज्ञानामृतमहोदयः ॥ ६ ॥

मनःकुवलयोल्लासकारिणी तिमिरापहा ।
यद्वक्त्रचन्द्रसम्भूता भारती चन्द्रिकायते ॥ ७ ॥

निश्शेषजगदानन्दसन्दोहमुदिताशयः ।
यस्यागस्त्येश्वराधीशो वामराशिगुरुर्गुरुः ॥ ८ ॥

उत्तुङ्गसत्त्वगम्भीरादुत्पन्नो यस्त्रिविक्रमात् ।
सन्मध्यविकसन्मूर्तिः सागरादिव चन्द्रमाः ॥ ९ ॥

गङ्गातरङ्गनिर्धौतजटामुकुटशोभितः ।
यस्य चेतस्यसावास्ते सदारश्चन्द्रशेखरः ॥ १० ॥

लसन्मृदुपदावल्या बालव्युत्पत्तिकारणम् ।
तेन साहित्यसारोऽसौ क्रियते नाट्यलक्षणम् ॥ ११ ॥

आहृत भरतात्किञ्चिदुत्तरात्किञ्चिदुद्धृतम् ।
कलित कोहलात्किञ्चित्किञ्चिद्भरतविस्तरात् ॥ १२ ॥

शास्त्रमेतदनालोच्य स्वबुद्ध्या नाटकादिषु ।
पद्य वा पदमेक वा य करोति समन्दधी ॥ १३ ॥

यश्शब्दशास्त्रनिशित स्वभावविशदाशय· ।
भरतादिषु निष्णात स हि साहित्यपण्डित ॥ १४ ॥

अशास्त्रज्ञ प्रयोक्ता च प्रेक्षावानपि कोविदै. ।
अस्य तन्त्रस्य तत्त्वज्ञै. निर्लज्ञ इति कथ्यते ॥ १५ ॥

अभियोगाभिभूतात्मा रसभावविभावक. ।
पठिताशेषभरत प्रयोक्ता भरतोदितम् ॥ १६ ॥

गुणागुणगणाशेषपरीक्षाप्रवणाशयै· ।
शास्त्रमेतदशेषेण बोद्धव्य प्रेक्षकैरपि ॥ १७ ॥

वस्तुनस्तत्त्वमास्थाय तन्मयत्वेन भावक· ।
सुप्रसन्नाशय प्रोक्त· प्रेक्षको नाट्यकोविदै· ॥ १८ ॥

नाट्य दशविधैर्भेदै भिन्नं सञ्ज्ञासमन्वितै· ।
ताननेकपदाकारं निरुक्त्यैव वदाम्यहम् ॥ १९ ॥

नाटक सप्रकरण भाणेहामृगवीथय. ।
व्यायोग समवाकार· साङ्क प्रहसन डिमः ॥ २० ॥

अन्येषा प्रकृतित्वेन निश्शेषैर्लक्षणैस्सह ।
तत्र नाटकमाचार्यैरादावेव विचार्यते ॥ २१ ॥

नटानामिदमित्याहुर्नाटक वा विचक्षणाः ।
चत्वारो ब्रह्मणः पुत्रा नटास्तु भरतादयः ॥ २२ ॥

येषा नामभिरेवैताश्चतस्रो वृत्तयस्स्मृता ।
सर्वविद्याविधिर्नाट्यमिति नाट्यविदो विदु ॥ २३ ॥

षट्सहस्रीकृताप्येतदेवमेवोदित यथा ।
न सा विद्या न तच्छिल्प न तद् ज्ञान न सा क्रिया ॥ २४ ॥

नासौ कला न तद्योग्य नाटके यन्न दृश्यते ।
नान्दीप्रस्तावनावस्तुबीजबिन्दुविभूषितम् ॥ २५ ॥

सन्धिसन्ध्यङ्गसहित साङ्गवृत्तिसमन्वितम् ।
निश्शेषदूषणापेतमाविष्कृतविभूषणम् ॥ २६ ॥

अशेषलक्षणोल्लासि भाषासङ्केतभूषितम् ।
अङ्कावतारविष्कम्भचूलिकाभिरलङ्कृतम् ॥ २७ ॥

नायिकानायकानेकपरिवारजनावृतम् ।
पाठ्यप्रयोगगुणाङ्कास्यप्रवेशकनिरन्तरम् ॥ २८ ॥

सकाकुरसगर्भाङ्क चतुर्वर्गफलाश्रयम् ।
सर्वप्रीतिकरोदर्क विज्ञेय नाटक बुधै ॥ २९ ॥

नन्दी वृषो वृषाङ्कस्य जगदादौ जगत्पते ।
नृत्यत कल्पनायोगाज्जगाम किल रङ्गताम् ॥ ३० ॥

तस्य तद्रङ्गसबन्धात्पूजा या क्रियते जनै ।
नाटके नाट्यतत्त्वज्ञै. सा नान्दीत्यभिधीयते ॥ ३१ ॥

या पूर्वरङ्गसबन्धाद्द्वाविशत्यङ्गवर्तनी ।
सभ्यान् नन्दयतीत्येव सापि नान्दी निगद्यते ॥ ३२ ॥

कविभावकशैलूषैरशेषैर्नाटकादिषु ।
क्रियते सा यथासख्य वाङ्मनःकायकर्मभि ॥ ३३ ॥

सूक्तिमुक्ताकलापेन सूत्रेणैकत्र वस्तुन ।
क्रियते सूचना नाट्ये या सा प्रस्तावना स्मृता ॥ ३४ ॥

आमुखस्थापनाभेदात सा पुनर्द्विविधा भवेत् ।
सूत्रधारो नटीयुक्तो वस्तुप्रस्तावनाविधिम् ॥ ३५ ॥

कुरुते यत्र सद्वृत्तैस्तदामुखमुदाहृतम् ।
पारिपार्श्वकसंयुक्तो वा विदूषकसंयुतः ॥ ३६ ॥

वस्तु विस्तारयेत्सूत्री यत्र सा स्थापना स्मृता ।
अत्रैव विधिरादिष्टो गुरुभिस्तत्त्ववेदिभिः ॥ ३७ ॥

पूर्वरङ्गं विधायादौ साङ्गं रङ्गव्यवस्थितेः ।
कृतसादस्य सत्कारे सूत्रधारे कृताञ्जलौ ॥ ३८ ॥

तद्वन्नट प्रविश्यान्यश्शुद्धाम्बरधरश्शुचिः ।
काव्यमास्थापयेदाशु सविशेषगुणाश्रयम् ॥ ३९ ॥

दैविकं दैविको भूत्वा मानुषं मानुषाकृतिः ।
तयोरन्यतरो भूत्वा मिश्रीभूतमपश्रमः ॥ ४० ॥

सूचयेत्स्वगिरा साधु प्रोद्भिद्यदमृतश्रिया ।
सबीजं वस्तु वा तत्र मुखं वा पात्रमेव वा ॥ ४१ ॥

अनवद्यपदैः पद्यैः सभ्यासभ्यान् प्रसादयन् ।
ऋतुमासाद्य यं कञ्चिद्भारतीं वृत्तिमाश्रयेत् ॥ ४२ ॥

भारती तु यथायोगं स्वप्रसङ्गे विधास्यते ।
सर्वमुक्त्वाऽथ वक्तव्यमन्ते प्रस्तावनाविधेः ॥ ४३ ॥

सूत्रधारं स्वयं गच्छेदागच्छेत्पात्रमन्तिके ।
सूचितस्स्तुतया गीत्या श्रुत्वा स्मृत्वा समीक्ष्य वा ॥ ४४ ॥

नाटके नायकादीनां कथावस्त्वभिधीयते ।
मुख्यामुख्यप्रभेदेन तदत्र द्विविधं स्मृतम् ॥ ४५ ॥

तत्र नेतृकथामुख्यममुख्यमितरद्भवेत् ।
तदमुख्यमपि त्रेधा वस्तु सर्वत्र नाटके ॥ ४६ ॥

पताकाप्रकरीयुक्ता पताकास्थानयोगत· ।
नायकस्य कथामध्ये तत्समानस्य या कथा ॥ ४७ ॥

आफलोदयमाबन्धा सा पताकेति कथ्यते ।
येन केनाप्यनल्पेन हेतुना पूर्वमुद्भकम् ॥ ४८ ॥

पश्चान्न दृश्यते यत्तु तद्वस्तु प्रकरी भवेत् ।
अतीतेऽनागते कार्ये कथ्यते यत्र वस्तुन· ॥ ४९ ॥

अन्यापदेशव्याजेन पताकास्थानक तु तत् ।
सद्सन्मिश्रभेदेन सर्वमेतत्त्रिधा भवेत् ॥ ५० ॥

इतिहासादिसभूत सदित्यभिमत सताम् ।
असदित्युदित सर्वैः स्वबुद्ध्या कविकल्पितम् ॥ ५१ ॥

अन्यदन्योन्यसभिन्न मिश्रमित्यभिधीयते ।
द्विधा विभाग कर्तव्य· सर्वस्यापीह वस्तुनः ॥ ५२ ॥

दृश्य श्रव्य सूचनीयमिति सचिन्त्य योग्यताम ।
गीतरूपगुणोपेत दृश्यं श्रव्यमुदाहृतम् ॥ ५३ ॥

नीरस लौकिकापेतमशास्त्रीय च यद्भवेत् ।
तद्वस्तु सूचनीय स्यादत्र विष्कम्भकादिभिः ॥ ५४ ॥

साहित्यसारतत्त्वज्ञस्थाने स्थाने पुन पुनः ।
वस्तु मध्ये पृथक्कृत्वा वस्तुविस्तरहेतवे ॥ ५५ ॥

चतुष्षष्ट्यङ्गकार्याणि षडेतानि निवेशयेत् ।
अभिप्रेतस्य रचना गोप्यस्य परिगोपनम् ॥ ५६ ॥

प्रकाशन प्रकाश्यस्य रागसम्पादनोदय· ।
प्रयोगस्य कृत काव्य सचेतोहारिता व्रजेत् ॥ ५७ ॥

धर्मप्रभृतिकार्यस्य सन्निबन्धाख्यनाटके ।
मन्दमन्दोदितो हेतुर्बीजमित्यभिधीयते ॥ ५८ ॥

अवान्तरान्यकार्यस्य प्रन्तु प्रारभ्यानुयायिन ।
सद्यस्सम्बन्धविच्छेदे बिन्दुरच्छेदकारणम् ॥ ५९ ॥

प्रकृतार्थप्रकृतय पञ्चावस्थाभिरन्विता ।
भरतादिभिरादिष्टा मुखाद्या पञ्चसन्धय ॥ ६० ॥

आरब्धस्येह कार्यस्य पञ्चावस्था प्रकीर्तिता ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलोदया ॥ ६१ ॥

आरम्भस्तद्गता वाञ्छा सा फलोदयनिर्भरा ।
प्रयत्नस्तदलाभेन व्यापारातिशयो महान् ॥ ६२ ॥

सम्पदापत्समायोगात्प्राप्त्याशा नद्सम्भवात् ।
अपायाभावविभवान्नियताप्तिस्तदागम ॥ ६३ ॥

समस्तफलनिष्पत्तिर्निरवद्यफलोदय. ।
मुखं प्रतिमुख गर्भः सावमर्शोपसंहृति ॥ ६४ ॥

पूर्वमत्र विनिर्दिष्टास्त इमे पञ्चसन्धय ।
बीजोत्पत्तिर्मुख नानाभावार्थरससम्भवा ॥ ६५ ॥

दृश्य दृश्यसमुद्भेदस्तस्य प्रतिमुख भवेत् ।
अस्तव्यस्तस्य सर्वत्र गर्भस्तस्य गवेषणम् ॥ ६६ ॥

छलाज्ञसमृशोद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भः स्वगीतबीजार्थस्सोऽवमर्शस्सता मत ॥ ६७ ॥

मुखादयस्त्वनेकार्था बीजेनेतस्तत कृता. ।
एकत्व यत्र नीयन्ते तत्तु निर्वहण भवेत् ॥ ६८ ॥

मुखस्य द्वादशाङ्गानि कथ्यन्ते तानि नामतः ।
सोपक्षेपः परिकर. परिन्यासावलोभने ॥ ६९ ॥

युक्तिप्राप्तिसमाधानविधानपरिभावना ।
उद्भेदो भेदकरणे लक्षण त्वभिधीयते ॥ ७० ॥

बीजन्यासविधिस्तज्ज्ञैरुपक्षेप इति स्मृत ।
शब्दार्थभेदसयोगवशात्सोऽपि द्विधा भवेत ॥ ७१ ॥

तद्व्याप्तिगुणबाहुल्य सर्वे परिकर विदु ।
तस्य निष्पत्तिसौन्दर्य परिन्यासो विधीयते ॥ ७२ ॥

विलोभन गुणाख्यान युक्तिरर्थावधारणम् ।
प्राप्तिस्सुखागमोल्लास समाधान प्रियोदय ॥ ७३ ॥

विधान सुखदु खाप्तिर्विस्मय परिभावना ।
उद्भेदो गूढनिर्भेदो भेदो लोभकर वच ॥ ७४ ॥

करण प्रकृतारम्भो मुखाङ्गानि गतान्यथ ।
वक्ष्ये प्रतिमुखाङ्गानि प्रसिद्धानि त्रयोदश ॥ ७५ ॥

उपासनमुपन्यासविलोभौ शमनर्मणी ।
विरोधवर्णसहारौ सवज परिसर्पक ॥ ७६ ॥

नर्मद्युतिपरायणे विधूत पुष्पमेव च ।
उपासनमुपास्याना विषयेष्वपसेवनम् ॥ ७७ ॥

उपन्यास इति प्रोक्त सोपाया वाक्यसङ्गति ।
रत्युत्कर्षो विलास स्यादाङ्गिको वाथ मानस ॥ ७८ ॥

शमः प्रियजनोद्भूतमनोदु खपरिक्षय ।
उपवासाय रचिता नर्मवाणी निगद्यते ॥ ७९ ॥

निरोधो हि निरोध स्यादिष्टक्रोधसमुद्भव ।
सर्ववर्णोपगमन वर्णसहार उच्यते ॥ ८० ॥

अर्थनिष्ठुरवाक्य तु प्रत्यक्ष वज्रमुच्यते ।
परिसर्पो भवेद्भूया भूयो बीजानुसर्पणम् ॥ ८१ ॥

प्रीतिनर्मद्युति. प्रोक्ता सरसा नर्मसभवा ।
बुद्धि परायण वस्तुन्याबद्धा परमार्थत ॥ ८२ ॥

विधूतमरतिः प्रोक्ता पुष्प स्याद्वागुदारता ।
अङ्गानि द्वादशोच्यन्ते गर्भसन्धेरतः परम् ॥ ८३ ॥

अद्भुताहरण मार्गरूपोदाहरणक्रमा ।
उद्वेगसग्रहाक्षेपसभ्रमास्सानुमास्तथा ॥ ८४ ॥

तोटकातिबले चैव लक्षण सम्प्रणीयते ।
अद्भुताहरण सद्भि कथ्यते छद्मचेष्टितः ॥ ८५ ॥

तत्त्वसकीर्तनोल्लासो मार्ग इत्यभिधीयते ।
वितर्कसयत बाक्य रूपके रूपमुच्यते ॥ ८६ ॥

यदर्थोत्कर्षवद्वाक्य तदुदाहरण स्मृतम् ।
मनसा चिन्त्यमानस्य प्राप्तिरेव क्रमो मत ॥ ८७ ॥

अरिभि क्रियमाणा या भीतिस्सोद्वेग इष्यते ।
सङ्ग्रह कथ्यते सद्भि॰ सामदानोचित वच ॥ ८८ ॥

गर्भबीजसमुद्भेद॰ सद्भिराक्षेप इष्यते ।
प्रियशङ्कासमुद्भूतिः सभ्रम॰ परिकीर्त्यते ॥ ८९ ॥

अभ्यूहश्चेष्टिताकारैरनुमानमुदाहृतम् ।
सरब्धवचन प्राज्ञैर्नाट्ये तोटकमुच्यते ॥ ९० ॥

अतिसन्धानमाचार्या नामकेऽतिबल विदु ।
अवमर्शस्य यान्यङ्गान्याहुस्तानि वदाम्यहम् ॥ ९१ ॥

अपवादोऽथ सफेटो विद्रवद्रवशक्तय ।
द्युतिप्रसङ्गछलनव्यवसायाः प्ररोचना ॥ ९२ ॥

विरोधन विच्छलनमादान तु त्रयोदश ।
दोषप्रख्यापवाद स्यान्निर्दोषस्येतरस्य वा ॥ ९३ ॥

रोषेण परुषाकारं सफेट. कटुभाषणम् ।
वधबन्धादिदु खानि नाटकादिषु विद्रव ॥ ९४ ॥

द्रवोऽवमर्शसभूता गुरुवर्गतिरस्कृति ।
क्षमा तिरस्कृतो रोष. शक्तिरित्यभिधीयते ॥ ९५ ॥

शत्रुभि क्रियमाणे द्वे तर्जनोद्वेजने द्युति· ।
अन्येषा पितर प्रीत्या प्रसङ्गो गुरुकीर्तनम् ॥ ९६ ॥

छलन प्राहुरन्ये तु क्रियमाणावधीरणम् ।
व्यवसाय स्वशक्त्युक्तिः पुरतः कस्यचित्कृता ॥ ९७ ॥

प्ररोचना स्यात्फणितिरभूतस्यापि भूतवत् ।
सरब्धवचनोल्लासो विरोधनमिति स्मृतम् ॥ ९८ ॥

सद्भिर्विच्छलन प्रोक्त नृणामात्मविकत्थना ।
शक्त्या शक्तिमत प्रोक्त आदान कार्यसग्रह ॥ ९९ ॥

ततो निर्वहणस्यास्य कथ्यतेऽङ्गानि विस्तरात् ।
सन्धिप्रसादग्रथननिरोधानन्दनिर्णयाः ॥ १०० ॥

पूर्वभावोपसहारपरिभाषणसश्रयाः ।
कार्यदृष्ट्यद्भुतप्राप्तिकृतयस्सप्रशस्तय· ॥ १०१ ॥

बीजप्रापणमेवात्र सन्धिरित्यभिधीयते ।
प्रत्युत्कर्षः प्रसादो वा विषयेषूपसेवनम् ॥ १०२ ॥

ग्रथन कथ्यतेऽस्माभिः कार्यस्यान्वेषणक्रम· ।
अस्तव्यस्तस्य कार्यस्य निरोधोऽन्वेषण भवेत् ॥ १०३ ॥

वाञ्छिताशेषससिद्धिरानन्दो विदुषा मत ।
उद्भूतवस्तुकथन निर्णय· परिकीर्तित. ॥ १०४ ॥

अभिप्रेतार्थससिद्धिः पूर्वभावो विधीयते ।
सम्यक् समाप्तिः काव्यानामुपसहार उच्यते ॥ १०५ ॥

परस्परकृता सूक्तिः परिभाषणमुच्यते ।
अद्भुतावाप्तिरधिका सश्रयः कथ्यते बुधै ॥ १०६ ॥

एकत्वं कार्यदृष्टिस्तु समस्तस्यापि वस्तुनः ।
उपपन्नेतरप्राप्तिरद्भुतप्राप्तिरुच्यते ॥ १०७ ॥

कृतिर्लब्धार्थसरक्षा प्रशस्तिश्शुभशंसनम् ।

सन्ध्यङ्गषष्टिरियमिष्टजनाभिपुष्टा
　　विस्पष्टवाक्यमधिता च चतुष्टयेन ।
विद्वन्मनोनिकररञ्जनतत्परेण
　　सर्वेश्वरेण रचिता कविपुङ्गवेन ॥

इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते

**साहित्यसारे** प्रथमः प्रकाशः

— —

# द्वितीयः प्रकाशः

सार्थैरङ्गैरनेकार्थैः कथ्यन्ते वृत्तयोऽधुना ।
भारती सात्त्विकी चैव कैशिक्यारभटी तथा ॥ १ ॥

नाटकोत्कर्षभेदाय चतस्रो वृत्तय कृता ।
ह्यसस्कृतभूयिष्ठश्चिताकारो नटाश्रय ॥ २ ॥

उल्लास. कोऽपि वचसा भारतीत्युच्यते बुधै. ।
व्यापारातिशय कोऽपि नेतुस्त्यागदयाधिक ॥ ३ ॥

निश्शोक· सत्त्वसम्पन्न सात्त्विकीति निगद्यते ।
मृदुश्शृङ्गारसयुक्तो नृत्तगीतमनोहर. ॥ ४ ॥

कामभोगैकनिरतो व्यापार कैशिकी स्मृता ।
मायेन्द्रजालसङ्ग्रामक्रोधव्यापिविचेष्टितम् ॥ ५ ॥

वृत्तिमारभटीमाहुर्नाट्यतत्त्वविचक्षणा ।
भारत्यङ्गानि चत्वारि वीथी प्रहसनामुखे ॥ ६ ॥

प्ररोचना च तत्राद्य स्वप्रसङ्गे भविष्यत ।
पूर्वमेवामुष्य प्रोक्तमेभ्य प्रस्तावनाविधौ ॥ ७ ॥

प्ररोचना तदस्माभिर्लक्षणेन निगद्यते ।
नटनाटकनेतॄणा कर्तुस्सभ्यजनस्य च ॥ ८ ॥

उन्मुखीकरण रङ्गे प्रशसातः प्ररोचना ।
सात्त्विक्यङ्गानि चत्वारि वक्तव्यानि सलक्षणम् ॥ ९ ॥

सल्लापोत्थापकौ तद्वत् सङ्घात्यपरिवर्तकौ ।
सल्लापको गभीरोऽक्तिर्नानाभावरसान्वित· ॥ १० ॥

एकमुत्थापयेद्यत्र युद्धायोत्थापकस्य हि ।
मन्त्रार्थदैवशक्त्याद्यैः सघात्यस्सघभेदनम् ॥ ११ ॥

प्रारब्धोद्योगकार्यान्यकरण परिवर्तक ।
नर्मस्फुञ्जो नर्मगर्भनर्मस्फाटास्सनर्मका. ॥ १२ ॥

कैशिक्याश्शास्त्रसभूता सेऽयमङ्गचतुष्टयी ।
नर्मस्फुञ्जः सुखारम्भो भयान्तो नवसङ्गमे ॥ १३ ॥

नर्मणा सुरतारम्भो नर्मगर्भ उदाहृतः ।
नर्मस्फोटो नृणामङ्गेष्वभिव्यक्ताङ्गजक्रिया ॥ १४ ॥

क्रीडाविवृद्धभणितिर्नर्म सर्वोपहासकृत् ।
तदत्राष्टादशविध प्रोक्त तत्तत्त्ववेदिभि· ॥ १५ ॥

वचश्शुद्ध क्रियाशुद्ध रूपशुद्ध तथैव च ।
वाचानुरागकथन वेषव्यक्तिकर तथा ॥ १६ ॥

चेष्टाव्यक्तिकरं चैव वागिच्छाप्रतिपादनम् ।
रूपेच्छाकरण चेष्टा स्पर्शाकरणमेव च ॥ १७ ॥

वाग्भेदन भेदरूप क्रियाभेदनमेव च ।
वाग्भय भयरूपी च चेष्टाभयकर तथा ॥ १८ ॥

वाग्भीत्यपरसयोगी वेषभीत्यपरा अपि ।
चेष्टाभयान्यसयोगीत्येवमष्टादशात्मकम् ॥ १९ ॥

केवलेनैव वचसा लोकहास्यकर नु यत ।
तदेव युक्तितोऽस्माभिर्वचश्शुद्धमुदाहृतम् ॥ २० ॥

केवलेनैव रूपेण जनताहासकारि यत् ।
तन्नर्म काव्यबन्धेषु रूपशुद्धन्निगद्यते ॥ २१ ॥

निदधाति गिरा यत्तु स्वानुरागनिवेदनम् ।
वाचानुरागकथन तदुक्त भरतादिभि. ॥ २२ ॥

नैपथ्यसविधानेन प्रणयादेशभाषणम् ।
करोति यत्तदेवात्र वेषव्यक्तिकर स्मृतम् ॥ २३ ॥

व्यापारेणैव तद्व्यक्तकर्माभिलाषनिवेदनम् ।
कुरुते तदिह प्राच्याश्चेष्टाव्यतिकरं विदुः ॥ २४ ॥

नेत्रवक्त्रभ्रुवां चेष्टाविशेषैर्लोकहासकृत् ।
यत्तदस्मद्विधैस्सर्वैः क्रियाशुद्धं निगद्यते ॥ २५ ॥

सम्भोगेच्छां गिरा यत्तु वदति प्रियसन्निधौ ।
तदत्र कथ्यते सद्भिः वागिच्छाप्रतिपादनम् ॥ २६ ॥

रूपेण स्पष्टमाचष्टे सम्भोगेच्छां यदायताम् ।
रूपेच्छाकथनं तत्तु कथ्यते तत्त्वकोविदैः ॥ २७ ॥

सम्भोगेच्छामतिप्रौढां चेष्टया प्रब्रवीति यत् ।
तदिह व्याहृतं चेष्टास्पृष्टाकरणमञ्जसा ॥ २८ ॥

वचसा भेदनं भर्तुर्वाग्भेदनमुदाहृतम् ।
रूपेण भेदकरणं रूपभेदं निगद्यते ॥ २९ ॥

क्रिययोच्चाटनं भर्तुः क्रियाभेदनमुच्यते ।
वाचा भीतिकरं नर्म वाग्भयं वस्तुनो भवेत् ॥ ३० ॥

रूपेण भीतिजननं भीतिरूपमुदाहृतम् ।
चेष्टया विदधद्भीतिं चेष्टाभयकरं विदुः ॥ ३१ ॥

वचस्सम्पृक्तया भीत्या रसान्तरविचारि यत् ।
वाग्भीत्यपरसंयोगि भवेत्तन्नर्म नाटके ॥ ३२ ॥

वेषावलोकनोत्पन्नभीत्या यच्च रसान्तरम् ।
याति नर्म तदेवात्र वेषभीत्यपराश्रयि ॥ ३३ ॥

व्यापारजातिभीत्यैव यद्गच्छति रसान्तरम् ।
चेष्टाभयान्यसंयोगि तदाहुर्नाट्यकोविदाः ॥ ३४ ॥

संक्षिप्तका च सम्फेटो वस्तुस्थापनयापने ।
इयमारभटीवृत्तेः कथ्यतेऽङ्गचतुष्टयी ॥ ३५ ॥

वस्तुभि. कल्पनायोगस्तत्र सक्षितका भवेत् ।
सम्फेटस्तु समाघात· क्रोधसरभयोर्द्वयो ॥ ३६ ॥

मायासस्थापित वस्तु वस्तुस्थापनमिष्यते ।
यापनन्त्वत्र निष्कामप्रवेशात्तार्सविद्रवा· ॥ ३७ ॥

पदे वाक्ये च वाक्यार्थे दोषा स्यु· काव्यसश्रया. ।
तत्र पूर्वं पदगता कथ्यन्ते सहलक्षणै ॥ ३८ ॥

सम्बन्धहीन दुर्बोधमप्रसिद्धमनर्थकम् ।
गूढार्थं रूढिरहितमप्रतीतमवाचकम् ॥ ३९ ॥

क्लिष्टमानमपुष्टार्थमसाधु सभयच्युतम् ।
अक्षमार्थान्तर कष्टमप्रयुक्त ससशयम् ॥ ४० ॥

विरुद्धार्थान्तर भ्रष्टमपार्थं ग्राम्यमस्तुतम् ।
पर्यायज्ञापक दृश्यमसभाव्यार्थसाधकम् ॥ ४१ ॥

इत्येव पदसबन्धा दोषाः स्यु. पञ्चविंशतिः ।
संबन्धे रूपमन्यस्य पदमन्यस्य यत्कृतम् ॥ ४२ ॥

सबन्धहीनमस्माभिस्तदेव हि निगद्यते ।
श्रवणव्यतिरेकेण यस्यार्थो न प्रतीयते ॥ ४३ ॥

काव्यतत्त्वविशेषज्ञै दुर्बोध तदुदाहृतम ।
शब्दशास्त्रविरोधित्वान्मोहाद्वा कापि यत्पदम् ॥ ४४

येन केनापि कथितमप्रसिद्धमुदाहृतम् ।
यदसत्कविना काव्ये पादपूरणमिच्छता ॥ ४५ ॥

क्रियतेऽर्थेन रहित तत्पद स्यादनर्थकम् ।
नितरामप्रसिद्धेऽर्थे बह्वर्थं यत्पद कृतम ॥ ४६ ॥

तदत्र काव्यतत्त्वज्ञा· गूढार्थ कवयो विदुः ।
सम्यगाच्छादितेष्वर्थेष्वप्रसिद्ध्या निरूपितम् ॥ ४७

कथ्यते रूढिरहित पदमस्मद्विधैरिह ।
शास्त्रमात्रप्रसिद्धं चैव प्रबन्धे यन्निरूप्यते ॥ ४८ ॥

तदाहुरप्रतीताख्य पद पदविचारकाः ।
अर्थान्तरे सुप्रसिद्ध यदन्यत्रापि साध्यते ॥ ४९ ॥

व्युत्पत्तिभ्रान्तिसयोगात्तदवाचकमुच्यते ।
स्वबुध्द्या कल्पितार्थं यत्तत्पद क्लिष्टमुच्यते ॥ ५० ॥

विचारपारुष्यवशात्स्वसौभाग्यविवर्जितम् ।
यत्पद तत्तु विद्वद्भिर्म्लानमित्यभिधीयते ॥ ५१ ॥

यत्र सन्दृश्यतेऽप्यर्थपदे तुच्छाभिधेयता ।
तदपुष्टार्थमित्याहु सर्वे साहित्यवेदिन' ॥ ५२ ॥

शब्दशास्त्रविरुद्ध च प्रबन्धे प्रतिपाद्यते ।
शब्दतत्त्वविशेषज्ञैस्तदसाधु निगद्यते ॥ ५३ ॥

यदुक्तमन्यथा काव्ये कवीना समयोऽन्यथा ।
तदेव सम्यगस्माभिः समयच्युतमुच्यते ॥ ५४ ॥

यस्यासमर्थतात्पर्यमिष्टस्यार्थस्य सूचने ।
अक्षमार्थान्तर तत्तु कथ्यते कविपुङ्गवैः ॥ ५५ ॥

दुरुच्चारतया काव्ये यदश्राव्याक्षरं पदम् ।
तदत्र सुकविव्रातैः कष्टमित्यभिधीयते ॥ ५६ ॥

लेशेनापि प्रबन्धेषु सुप्रसिद्ध न यत्पदम् ।
तदप्रयुक्तमित्याहुः सर्वे साहित्यवेदिन' ॥ ५७ ॥

वक्तव्यार्थमतिक्रम्य यदन्यत्रापि वर्तते ।
तदत्र लक्षणेऽस्माभि' ससशयमुदाहृतम् ॥ ५८ ॥

अर्थान्तर विरुद्धं स्याद्यत्र प्रस्तुतवस्तुन' ।
विरुद्धार्थान्तरं प्रोक्त तदत्र निपुणाशयैः ॥ ५९ ॥

वाञ्छितार्थपरिभ्रष्ट पदं भ्रष्टमिहोच्यते ।
अव्यर्थमर्थहीन च तद्द्विधा परिकीर्त्यते ॥ ६० ॥

तदपार्थमिति ज्ञेयं यदप्रस्तुतदीपकम् ।
सद्यस्सभ्येतरार्थस्य स्मारक ग्राम्यमुच्यते ॥ ६१ ॥

अस्तुत तद्बुधैरुक्तं यदमङ्गलवाचकम् ।
प्रसिद्धस्याभिधानस्य पर्यायै स्वेच्छयाकृतम् ॥ ६२ ॥

एकार्थैर्वाथ भिन्नार्थै पर्यायज्ञापक भवेत् ।
यस्य व्युत्पत्तिलेशोऽपि चिन्त्यमानो न दृश्यते ॥ ६३ ॥

तदल पदतत्त्वज्ञैर्दृश्यमित्यभिधीयते ।
असभवो यदर्थस्य सचय कलही मिथ ॥ ६४ ॥

तदुच्यतेऽत्र विद्वद्भिरसभाव्यार्थसाधकम् ।
एवमेते मया प्रोक्ता दोषा· पदसमाश्रया· ॥ ६५ ॥

वाक्याश्रया निगद्यन्ते सुव्यक्त लक्षणैस्सह ।
शब्दच्युत क्रमापेतमश्राव्य पुनरुक्तिमत् ॥ ६६ ॥

छन्दोभङ्गाकुल ग्राम्य व्याकीर्ण भग्नरीतिकम् ।
यतिभङ्गाश्रय न्यूनमधिक वाक्यगर्भितम ॥ ६७ ॥

विरुद्धपन्धिनिस्सन्धिकृच्छ्रार्थकमवाचकम् ।
इति वाक्यगता दोषा· षोडशेति निरूपिताः ॥ ६८ ॥

यत्सङ्गत्या स्फुट याति सुशब्दोऽप्यपशब्दताम् ।
तद्वाक्यमत्र साहित्ये शब्दच्युतमिति स्मृतम् ॥ ६९ ॥

पदार्थक्रमनिर्मुक्त क्रमापेतमिति स्मृतम् ।
बन्धकार्कश्यवद्वाक्यमश्राव्य कवयो विदु· ॥ ७० ॥

शब्दार्थयोः परावृत्त्या ह्युक्तयो पुनरुक्तिमत ।
छन्दसा विकल काव्य छन्दोभङ्गाकुल भवेत् ॥ ७१ ॥

उक्तिश्चातुर्यरहिता ग्राम्यमित्यभिधीयते ।
असङ्गताभिः सयोगि व्याकीर्णं स्याद्विभक्तिभि ॥ ७२ ॥

प्रारब्धरीतिविच्छेदो यत्र तद्भग्नरीतिकम् ।
यतिभङ्गेन सयुक्त यतिभङ्गाश्रय विदु. ॥ ७३ ॥

यस्यापरिसमाप्तिस्स्यात्तन्न्यूनमिति कथ्यते ।
अपर्याप्ततया ह्यर्थो यत्रैक. पर्यवस्यति ॥ ७४ ॥

पदानामिह तद्वाक्यमधिक कथ्यते बुधै ।
अत्यर्थसङ्गतार्थत्वाद्वाक्य वाक्यान्तरास्थितम् ॥ ७५ ॥

दुःखेन ज्ञापनीयार्थं वाक्य गर्भितमुच्यते ।
विरुद्धसन्धिग्राम्यादि· प्रस्तुतार्थस्य घातक· ॥ ७६ ॥

कृच्छ्रार्थकमिह ख्यातमौदार्यस्य विपर्यय ।
नार्थ विवक्षित वक्ति यत्तदाहुरवाचकम् ॥ ७७ ॥

एते वाक्यगता दोषा वाक्यार्थस्य वदाम्यहम् ।
औचित्यभङ्गस्सन्देहो रीतिभङ्गः क्रमच्युति· ॥ ७८ ॥

उपक्रमोपसहारविषम दुष्टभूषणम् ।
दुष्प्रतीतिकरं चेति सप्त वाक्यार्थसश्रया. ॥ ७९ ॥

औचित्यभङ्गो विज्ञेय· स्वात्मप्रख्यापनादिकः ।
सन्देहः पदजातस्य सन्दिग्धार्थत्वमुच्यते ॥ ८० ॥

प्रारब्धस्यान्यथाभावो रीतिभङ्ग उदाहृत. ।
अपक्रमाभिधेयत्व क्रमच्युतिरिति स्मृतम् ॥ ८१ ॥

उपक्रमोपसहारविषम वाच्यवक्रता ।
भिन्नलिङ्गोपमादीनि दुष्टभूषणमुच्यते ॥ ८२ ॥

सभ्येतरस्य स्पष्टोक्तिर्ग्राम्यमित्यभिधीयते ।
श्लेषः प्रसादस्समता माधुर्यं सुकुमारता ॥ ८३ ॥

अर्थव्यक्तिरुदारत्वमोज कान्तिसमाधयः ।
एते दश गुणा. प्रोक्ता काव्यबन्धे कवीश्वरैः ॥ ८४ ॥

सुश्लिष्टपदसन्धान श्लिष्टमित्यभिधीयते ।
यस्यार्थस्स प्रसाद स्यादनुक्तोऽपि प्रतीयते ॥ ८५ ॥

शब्दार्थौ समताऽन्योन्य नालङ्कारौ सुसम्कृतौ ।
अप्युक्त बहुशश्चेत प्रीतिकृन्मधुर मतम् ॥ ८६ ॥

पदैर्मृदुभिराकीर्णं सुकुमारमिहोदितम् ।
अर्थव्यक्ति पदोद्देशात् समस्तार्थावबोधिनी ॥ ८७ ॥

तदुदारत्वमासाद्य यन्मनो नापसर्पति ।
ओजस्समासबहुलस्सन्दर्भस्सुमनोहरः ॥ ८८ ॥

सुखोच्चारणता कान्तिस्सन्धिसन्तानसपदा ।
समाधिरन्यथाशब्दकल्पनीयार्थसञ्चय. ॥ ८९ ॥

अत परमलङ्कारा वक्ष्यन्ते सह लक्षणै ।
तत्र शब्दार्थसबन्धानुभयोल्लासितानपि ॥ ९० ॥

सम्यगेकत्र सक्षिप्य लिखामि मधुराक्षरम् ।
अपह्नुतिस्समासोक्तिरुपमा दीपक क्रम ॥ ९१ ॥

विशेषो रूपक जातिरुत्प्रेक्षा व्याजवर्णनम् ।
अप्रस्तुतस्तुतिस्साम्यमेकावलिविभावने ॥ ९२ ॥

आक्षेपव्यतिरेकौ च श्लेषोऽर्थान्तरमेव च ।
पर्यायोक्त विरोधश्च सङ्कीर्णं रसवत्तथा ॥ ९३ ॥

अतिशयोक्तिरत्युक्तिर्वक्रोक्तिर्ध्वनिरेव च ।
अन्योन्यमनुमान च सचित्र यमक तथा ॥ ९४ ॥

एते त्रिंशदलङ्कारा निर्दिष्टा रसकोविदै ।
व्यावर्णनीय प्रच्छाद्य यत्रान्यत्किञ्चिदुच्यते ॥ ९५ ॥

असम वा सम वाऽथ मा विज्ञेया ह्यपह्नुति ।
बहुधा सा भवेद्व्याप्ता स्वरूपविजयादिषु ॥ ९६ ॥

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुन ।
उक्तिस्सक्षिप्तरूपत्वात्सा समासोक्तिरिष्यते ॥ ९७ ॥

विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।
अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ ९८ ॥

यथाकथञ्चित्सादृश्य यत्रोद्भूत प्रतीयते ।
उपमा नाम सा यस्याः प्रपञ्चस्सुमहान् भवेत् ॥ ९९ ॥

धर्मवस्तुविपर्यासनियमातिशयाश्रया ।
मोहोत्प्रेक्षाविनिमया दृश्यास्सत्कविकर्मसु ॥ १०० ॥

मुख्यार्थवस्तुना युक्तैर्यद्वाक्यैस्सह सगतिम् ।
सन्दधद्बोधयत्यर्थास्तत्पद दीपक स्मृतम् ॥ १०१ ॥

पदान्तर्गतवाक्यैर्वा वाक्यार्थैरन्वित यदि ।
पदमेक क्रियावाचि तत्क्रियादीपक भवेत् ॥ १०२ ॥

यद्भूरिवाक्यसबद्धक्रियाणामेकमेव चेत् ।
उच्यते कारकपद तत्स्यात्कारकदीपकम् ॥ १०३ ॥

यत्र दीपकसूत्रेण वाक्यपुष्पाणि सत्कवि. ।
ग्रथ्नात्यपूर्वविच्छित्त्या तन्मालादीपक विदुः ॥ १०४ ॥

उपमानोपमेयानां यस्संबन्ध. क्रमोदित· ।
कथ्यते स इहास्माभि सख्यान वा क्रमोऽपि वा ॥ १०५ ॥

अभिन्नस्योपमानेन प्रस्तुतस्य गुणद्युति· ।
विशेष वक्तुमुदिता विशेष इति कथ्यते ॥ १०६ ॥

सादृश्यशब्दहीना चेदुपमा रूपक भवेत् ।
एतद्विकल्पनीय स्यात्कविभि काव्यकोविदै ॥ १०७ ॥

सविशेषणमेकाङ्गमयुक्तं व्यतिरेकवत् ।
समस्तमसमस्तं च समस्तव्यस्तमित्यपि ॥ १०८ ॥

यस्य यस्यामवस्थायां यादृशं वस्तुनो वपु॰ ।
तथैतद्वर्णयन्त्युक्तिरग्राम्या जातिरुच्यते ॥ १०९ ॥

जातिक्रियागुणद्रव्यैरेषा सुबहुधा मता ।
वस्तुनोऽन्यप्रकारेण स्थितस्यापरथैव यत् ॥ ११० ॥

उत्प्रेक्षण हि सोत्प्रेक्षा प्रायस्सादृश्यगर्भिता ।
अपकर्षमुपन्यस्य निन्दाभास प्रदृश्यते ॥ १११ ॥

अत्युत्तमा स्तुतिं कर्तु यत्र तद्व्याजवर्णनम् ।
प्रस्तुत परिहृत्योच्चैरुपमानन्निगद्यते ॥ ११२ ॥

अप्रस्तुतस्तुतिस्सेयमस्माभिरभिधीयते ।
तयोर्यत्र गुणाधिक्याद्वर्तते वर्णनीयता ॥ ११३ ॥

तत्साम्यमुच्यतेऽन्यत्र ख्यातेय तुल्ययोगिता ।
यस्मिन् पूर्वस्व पूर्वस्य भवेदुत्तरमुत्तरम् ॥ ११४ ॥

विशेषण पदार्थस्य वस्तु सैकावली मता ।
कार्यस्य निजमुत्सृज्य कारण कारणान्तरम् ॥ ११५ ॥

यत्र स्वाभाविकं भावि विभाव्य सा विभावना ।
वर्णनीयसमुत्कर्षसिद्धये यो विधीयते ॥ ११६ ॥

आक्षेप उपमानस्य तमाक्षेप प्रचक्षते ।
एकोभयगुणश्लेषहेतुभिस्सोऽपि भेदभाक् ॥ ११७ ॥

सम्यक् सादृश्यकथन भिन्नयोर्वस्तुनोर्द्वयो ।
श्लेष इत्युच्यतेऽस्माभि स चानेकविधो भवेत् ॥ ११८ ॥

कश्चित्प्रतिपद भिन्नः कश्चित् भिन्न कचित्पदै॰ ।
कश्चिदर्थैकसयोगी कश्चिच्छब्दैकभेदकः ॥ ११९ ॥

पूर्वोक्तसाध्यवाक्यार्थं यस्साधयितुमुच्यते ।
हेतुगर्भोऽन्यवाक्यार्थः स एवार्थान्तरं भवेत् ॥ १२० ॥

प्रकारेणापरेणैव यद्वाक्यार्थमति(क्रिया)प्रियम् ।
शब्दार्थवृत्तिशून्येन पर्यायोक्त तदुच्यते ॥ १२१ ॥

प्रस्तुतार्थस्य पुष्ट्यर्थं यत्काव्येषु प्रदृश्यते ।
विरोधाभासवचन सा विरोध इति स्मृत ॥ १२२ ॥

ससर्गोऽलङ्कृतीना य समकक्ष्यतया कृत ।
अङ्गाङ्गित्वेन बद्धाना सङ्कीर्णं तन्निगद्यते ॥ १२३ ॥

रसाभासादिनिर्माणकारण यद्विभूषणम् ।
तदत्र रसवद्वाचा रसबन्धविधानतः ॥ १२४ ॥

सन्देहैर्नातिरिक्त यल्लोकातीत निगद्यते ।
कविभिर्बुद्धिवैशित्यात्स एवातिशयो मत ॥ १२५ ॥

असभाव्यार्थकथनमत्युक्तिरिति कथ्यते ।
वक्रोक्तिरुक्तवाक्यार्थस्वीकारोऽन्यादृशस्स्मृतः ॥ १२६ ॥

वस्त्वन्तरप्रसङ्गेन ध्वनिः स्याद्भाववर्णनम् ।
भूष्यभूषणरूपत्व मिथस्स्याद्यत्र वस्तुनोः ॥ १२७ ॥

सादृश्यमन्तरेणापि तदन्योन्यमिति स्मृतम् ।
यादृशेनापि लिङ्गेन परोक्षं यदि गम्यते ॥ १२८ ॥

वस्तु पुष्टार्थरसवदनुमान तदुच्यते ।
शब्दाभासस्तु यमक पदादिष्वपि कल्पितम् ॥ १२९ ॥

नैवान्तस्तद्विकल्पाना तदृश्य कविकर्मणि ।
विचित्रशब्दसन्दर्भश्चित्रमित्यभिधीयते ॥ १३० ॥

सोऽपि सन्दृश्यते मार्गश्चक्रबन्धादिषु स्मृतः ।
अनौचित्यात्तदस्माभि काव्यसारे निरूप्यते ॥ १३१ ॥

सर्वसाहित्यविद्यासु परं प्रावीण्यमिच्छता ।
कविना काव्यसारो हि श्रोतव्य प्रौढचेतसा ॥ १३२ ॥

तत्र प्रश्नोत्तर त्रेधा कथ्यते कविपुङ्गवैः ।
अन्तर्लापिक्रम कोऽपि बहिर्लापिक्रमोऽपर ॥ १३३ ॥

उभयात्मा भवेत्कोऽपि त्रिभङ्गी नाम शोभन ।
यत्रोत्तरपद वृत्ते सोऽन्तर्लापी निगद्यते ॥ १३४ ॥

बहिरेवोत्तर यत्र बहिर्लापी स उच्यते ।
एकमेवोत्तरपद बाह्य यत्र त्रिधाकृतम् ॥ १३५ ॥

सुश्लिष्ट पतितश्लोके त्रिभङ्गा सा निगद्यते ।
अन्तर्लापिप्रभेदस्स्यात् कोऽपि गुप्तोत्तराभिध ॥ १३६ ॥

साक्षरच्युतक कोऽपि दुर्भेद्य कुशलैरपि ।
बहिर्लापिप्रभेदोऽपि लेशेनेह प्रदृश्यते ॥ १३७ ॥

एकालाप द्विरभ्यास साक्षरच्युतक तथा ।
गतप्रत्यागत मिश्रमिति पञ्चविधस्स्मृत ॥ १३८ ॥

प्रश्नगर्भतयैवोचै. यत्र स्यादुत्तरं पदम् ।
तदेव कथ्यतेऽस्माभिर्गुप्तोत्तरमिति स्फुटम् ॥ १३९ ॥

कार्प्यक्षराणा लोपेन यत्रार्थ प्रतिपाद्यते ।
उत्तरोक्तप्रकारेण साक्षरच्युतक हि तत् ॥ १४० ॥

एकमेव पद द्व्यर्थं यत्र स्यादुत्तरं द्विधा ।
प्रश्नद्वयमपि श्लोके तदेकालापमुच्यते ॥ १४१ ॥

एकमेवोत्तरं यत्र लिङ्गेन वचनेन वा ।
प्रयाति भेदद्वितय चिराभ्यासस्स उच्यते ॥ १४२ ॥

यत्र स्याल्लिपिलोपेन समीचीनोऽर्थविस्तर ।
न भवत्यन्यथार्थत्वे तत्स्यादक्षरलोपकम् ॥ १४३ ॥

प्रतिलोमानुलोमेन यत्र स्यादुत्तरं द्विधा ।
गतप्रत्यागतमिति तदेव कवयो विदुः ॥ १४४ ॥

संस्कृतप्राकृतोल्लासि मिश्रमित्यभिधीयते ।
वलयारान्तरालेषु रथाङ्गस्य तथोदरे ॥ १४५ ॥

नियमेनाक्षरन्यासश्चक्रबन्धो निगद्यते ।
तस्य भेदो महानेव नास्माभिरिह कथ्यते ॥ १४६ ॥

प्रसिद्धत्वात्परं वाच्यमष्टार षडरं तथा ।
चतुर्णामेव सुव्यक्तमराणामन्तरार्पितैः ॥ १४७ ॥

यत्रान्योन्यप्रबन्धाना गतप्रत्यागताक्षरैः ।
आरम्भश्च समाप्तिश्च पदाना नाभिमण्डले ॥ १४८ ॥

अराणा व्यक्तमन्येषामग्रेष्वेकैकमक्षरम् ।
अराणामन्तरालेषु बहिर्वलयवर्तिषु ॥ १४९ ॥

एकैकाक्षरसयुक्त छन्दसा त्रिष्टुभा कृतम् ।
तदष्टारमिति ज्ञेयं विद्वद्भिश्चक्रबन्धनम् ॥ १५० ॥

वलयत्रितयच्छिद्रेष्वेकद्वित्र्यक्षरान्वितम् ।
एकं नाभ्यक्षरं यत्र कविकाव्याभिधाङ्कितम् ॥ १५१ ॥

चतुर्थपादससक्तैराद्यन्तैरक्षरैः श्रितम् ।
अरषट्कस्य रेखासु पदत्रितयमुच्यते ॥ १५२ ॥

षडराग्रान्तरालेषु द्वाभ्या प्रत्येकमागतः ।
अक्षराभ्यामतिस्पष्टकल्पिताभ्या प्रपूरितः ॥ १५३ ॥

तदक्षरं तृतीयान्ते पादाद्यन्तातिशायिभिः ।
पादश्चतुर्थो दृश्येत बहिर्वलयमण्डले ॥ १५४ ॥

तदल षडरन्नाम कथ्यते चक्रबन्धनम् ।
एकमेवाक्षरं यत्र कर्णिकामध्यसस्थितम् ॥ १५५ ॥

वृत्तार्धत्व प्रयात्यर्धं दलस्यान्याक्षराणि च ।
अन्योन्यसंकरात् श्लोकः पदबन्धस्स उच्यते ॥ १५६ ॥
एवमेवावगन्तव्यो विद्वद्भिश्चित्रविस्तर॰ ।

सत्काव्यलक्षणमशेषगुणाभिरामं
निश्शेषदूषणविशेषविचारयुक्तम् ।
एतद्व्यधायि बुधमण्डलमण्डनेन
सर्वेश्वरेण कविना मुनिपुङ्गवेन ॥

इति साहित्यसारे द्वितीयः प्रकाश॰

# तृतीयः प्रकाशः



## षट्त्रिंशत्काव्यगुणाः

भूषणमक्षरसघः शोभा गुणकीर्तनन्निरुक्त च ।
अभिमानोदाहरणे गुणानुवादः प्रिय हेतु. ॥ १ ॥

प्रोत्साहनसारूप्ये मिथ्याव्यवसायसिद्धिदृष्टान्ता ।
आशीस्सशयकपटौ क्षमाभुवृत्ती पदोच्चयाक्रन्दौ ॥ २ ॥

परिदेवनोपवृत्ती याच्ञा प्राप्तिर्मनोरथो युक्ति. ।
अतिशयपृच्छाख्यानप्रतिषेधास्सानुनीतिनिर्भासा ॥ ३ ॥

कार्य पश्चात्ताप. षट्त्रिशल्लक्षणावलिस्सेयम् ।
नाट्ये भावार्थगताः सालङ्कारा बुधै· प्रयोक्तव्याः ॥ ४ ॥

अलङ्कृतिरलङ्कारैरभिधेयस्य भूषणम् ।
अल्पाक्षरैरनल्पार्थविवृतिस्त्वक्षरावलिः ॥ ५ ॥

सिद्धैरर्थैस्समीकृत्य शोभाऽसिद्धस्य भाषणम् ।
बहूनामभिधेयाना वर्णन गुणकीर्तनम् ॥ ६ ॥

निरुक्त द्विविध तथ्यमतथ्यमिति कथ्यते ।
मिथ्या(सिद्धया)प्रसाधित तथ्यमतथ्यमितरद्भवेत् ॥ ७ ॥

अनिर्णयोऽभिमानस्स्यादभिधेयस्य हेतुभिः ।
उदाहृतिर्गभीरोक्ति प्रसिद्धयाक्षेपगर्भिता ॥ ८ ॥

गुणानुवादो महता गुणेनाल्पस्य तुल्यता ।
आदौ यत्क्रोधजनन तत्प्रिय प्रीतिकृत्पुनः ॥ ९ ॥

अनादृत्य बहूनर्थान्हेतुरिष्टार्थशसनम् ।
प्रीत्युत्साहकरैरर्थैरुक्तिः प्रोत्साहन भवेत् ॥ १० ॥

अपदेश्य· परोक्षोऽपि सारूप्यं जायते यतः ।
अभूतपूर्वैर्यत्रार्थैरसदर्थ प्रसाध्यते ॥ ११ ॥

स मिथ्याव्यवसाय स्यात् वक्तृव्यापारनिश्चया ।
सिद्धिस्स्यादप्रसिद्धस्य सुप्रसिद्धेषु कीर्तनम् ॥ १२ ॥

सहातिसदृशार्थेन दृष्टान्तोऽर्थस्य शंसनम् ।
आशीराशसन वस्तुन्यभीष्टे मृदुभि· पदै. ॥ १३ ॥

अपरिज्ञाततत्त्वार्थं वचस्सशय उच्यते ।
छलोक्त्या कथितार्थस्य कपटोऽन्यादृशग्रह· ॥ १४ ॥

दुर्जनोक्तिषु तीव्रासु क्षमा स्यादविकारता ।
प्रश्रयेणान्यथार्थोक्तिरनुवृत्तिरिति स्मृता ॥ १५ ॥

गुणैरनेकैरेकार्थैरुचितैरुत्तरोत्तरम् ।
पदोच्चयो वस्तुनस्स्यादुज्ज्ञतात्मकवर्णनम् ॥ १६ ॥

तीव्रस्साक्षादवाच्योऽर्थो यत्राभिप्रायगोचर ।
आख्यायतेऽन्यथाऽन्यस्य स एवाक्रन्द उच्यते ॥ १७ ॥

अन्यथाऽन्यकृतैर्दोषै परिदेवनमन्यथा ।
प्रसिद्धदोषगुणतामुपवृत्ति विदुर्बुधा ॥ १८ ॥

आदौ क्रोधकृदायत्या सफल वस्तु याचनम् ।
दृष्ट्वाऽवयवमर्थस्य कल्पन प्राप्तिरुच्यते ॥ १९ ॥

मनोरथो भूतपू( र्वे ? )स्वाभिप्रायस्य शसनम् ।
साध्यते योऽस्य सबन्धे युक्तिर्वस्तुभिरिष्यते ॥ २० ॥

अत्युत्तमार्थादधिक· योऽर्थस्सोऽतिशयस्स्मृत. ।
यत्राकारगभीरोक्त्या पृच्छा पुष्टार्थकीर्तनम् ॥ २१ ॥

पृष्टैरपृष्टैर्वाख्यान कैश्चिदर्थस्य निर्णयः ।
अर्थेन रमते( ? ) रम्या प्रतिषेधोऽपि हि क्रिया ॥ २२ ॥

अनुनीतिरपूर्वस्तु( स्य ? ) क्रोधस्योद्दीपनक्रिया ।
अनेकयुक्तिमद्वाक्य तन्निर्भासनमुच्यते ॥ २३ ॥
दोषादुत्सार्य कार्यं स्यात् गुणेऽर्थस्य निवेदनम् ।
अकार्यं सहसा कृत्वा पश्चात्तापोऽनवस्थिति ॥ २४ ॥

## पात्रसंबोधनादिक्रमः

आक्रीड देहळी हञ्जे हळा हीमाणहेति च ( सखी ) ।
ओवट्टिह वरण्डी ही पुरोभागजनान्तिके ॥ २५ ॥
आकाशहन्तस्वगतप्रकाशस्वामिभावुकाः ।
ऊ राजन् भाव भगवन् अज्जु भट्टिणि गण्डिका ॥ २६ ॥
ई शर्मन्मम्महे वण्डा बाढ मा भर्तृदारिके ।
स्वामिन्यात्मगत कान्ते प्रिये हे मञ्जुभाषिणि ॥ २७ ॥
आर्य देव विभो वत्स सारथे राजदारिके ।
हण्डे कुलपतिर्वेद्या सौदामन्यामनामत ॥ २८ ॥
आवुत्तो भगवत्यत्ता गुरुर्जात हमज्जुका ।
आयुष्मन् प्रथम· कल्प· विजयी सार्थवाहकः ॥ २९ ॥
चम्पकाशोकपुन्नागमालतीयूथिकावृतम ।
आहुरुद्यानमाक्रीडन्नामतो नाट्यकोविदाः ॥ ३० ॥
गृहालिन्दकभागस्तु देहलीति निगद्यते ।
नाटके नाट्यतत्त्वज्ञै. वक्तव्या साधु सा क्वचित् ॥ ३१ ॥
नियमेनैव वक्तव्या हञ्जेति परिचारिका ।
गणिकाभिरथान्याभि· समया सा निगद्यते ॥ ३२ ॥
हलेति कथ्यते चेटी नाटके नायिकाजनैः ।
गणिकाभिरपि क्वापि विवादे राजदारिका ॥ ३३ ॥

शबराभीरचण्डालश्वपाकवृषलादिभिः ।
हीमाणह इति स्पष्ट वक्तव्य सहशे जने ॥ ३४ ॥

समानरूपसपत्तिशीलादिगुणशालिनी ।
सखीति कथ्यते नारी नारीभिर्नाटकाश्रिता ॥ ३५ ॥

विद्यमानेषु मनसि कार्यजातेष्वनेकधा ।
तदोवह्टिहमित्याहुः प्रधान यन्मनीषिणः ॥ ३६ ॥

आकाशे वातसयोगात् सञ्जातो यो वरण्डकः ।
स एवान्योन्यशब्देन वरण्डीत्यभिधीयते ॥ ३७ ॥

भयाहङ्कारसम्मानमोहकण्ठग्रहादिषु ।
हीशब्दोऽपि प्रयोक्तव्यश्चेटचेटीविदूषकै ॥ ३८ ॥

## जनान्तिकादिः

पश्चात्तापप्रवासोर्वीचलनप्राणहानिषु ।
नायिकाहृदयोत्कम्प. पुरोभाग इति स्मृतः ॥ ३९ ॥

त्रिपताक करं कृत्वा यदन्यस्य मनोगतम् ।
अप्रकाश जनो वक्ति तज्जनान्तिकमुच्यते ॥ ४० ॥

अप्रत्यक्षेण पात्रेण सह रङ्गस्थितो नरः ।
यद्वक्त्यभिमुखीकृत्य तदाकाशमिति स्मृतम् ॥ ४१ ॥

पुरोहितद्विजामात्यविटनेतृतपस्विभि. ।
विषादभयचिन्तासु हन्त इत्यभिधीयते ॥ ४२ ॥

समीपावस्थितेष्वन्येष्वनेकावाप्तबुद्धिषु (?) ।
मनसा यन्नरो वक्ति स्वगत तन्निगद्यते ॥ ४३ ॥

मनस्यवस्थितं कार्यं पुरतः पार्श्ववर्तिनाम् ।
निश्शङ्कमुच्यते यत्तु तत्प्रकाश विदुर्बुधा ॥ ४४ ॥

चमूपरिबृढामात्यजनतामण्डलेश्वरैः ।
स्वामीति विजयोल्लासी चक्रवर्ती निगद्यते ॥ ४५ ॥

समस्तख्यातसाहित्यसारनिष्णातमानसः ।
विचारचतुरः प्राज्ञो रसिको भावुकस्स्मृतः ॥ ४६ ॥

विरहोन्मादमूर्छायामीर्ष्याया वाऽङ्गनाजनैः ।
ऊ इत्येवानभिव्यक्तं वक्तव्यं नाटकादिषु ॥ ४७ ॥

उदात्तजातिविख्यातदेवब्राह्मणलिङ्गिभिः ।
नृपतिर्नाटकगतो राजन्नित्येव कथ्यते ॥ ४८ ॥

नटेन नाटके सूत्री भाव इत्यभिधीयते ।
सर्वाश्रमगतो वर्णी वा वर्णव्यञ्जनो जनः ॥ ४९ ॥

रङ्गे रङ्गगतैः पात्रैः भगवन्निति कथ्यते ।
पीठमर्दशठक्रूरधूर्तचेटीविटादिभिः ॥ ५० ॥

निन्दायामथवा गर्वे ईशब्दः सम्प्रयुज्यते ।
विद्याविनयसम्पन्नो द्विजन्मा नाट्यकोविदैः ॥ ५१ ॥

नाम्ना सहैव सम्बुद्धौ हे शर्मन्निति कथ्यते ।
यदृच्छाधिगमे प्रायो दुर्भगस्येह वस्तुनः ॥ ५२ ॥

नायिका वक्ति सन्तोषान्नित्यं ममह इत्ययम् ।
या रण्डा वर्णिपाषण्डैश्चण्डालैर्वा विनाशिता ॥ ५३ ॥

नाटके नाट्यशास्त्रज्ञैः सा पण्डी(वण्डे?)त्यभिधीयते ।
येन केनापि मान्येन प्रार्थ्यमानस्य वस्तुनः ॥ ५४ ॥

सहसा ज्ञानसम्पर्कादा इत्यार्यैर्निगद्यते ।
या राजपुत्री निश्शेषविख्यातजनवन्दिता ॥ ५५ ॥

राजस्त्रिया समायुक्ता सा कन्या भर्तृदारिका ।
सिंहासनाधिरूढा या पट्टोल्लासिललाटिका ॥ ५६ ॥

सा राजपुरुषैर्मुख्यैस्स्वामिनीति निगद्यते ।
मनसा चिन्तयित्वाऽर्थं हस्तविन्यस्तमस्तकः ॥ ५७ ॥

भूयशो यद्वदेदन्तः तदात्मगतमुच्यते ।
कान्तेति नायको ब्रूते दक्षिणः पूर्ववल्लभाम् ॥ ५८ ॥

स स्वस्यानभिप्रेता प्रियेति वदति स्त्रियम् ।
नाटकादिषु सर्वत्र विटस्सर्वाङ्गना प्रति ॥ ५९ ॥

हे मञ्जुभाषिणीत्येव वदत्यधिकबुद्धिमान् ।
वणिक्पुरोहितामात्यविटविप्रविदूषकाः ॥ ६० ॥

कथ्यन्ते मध्यमैः पात्रैरार्यशब्देन सर्वदा ।
स्वप्रधानादिभिर्भूपो देव इत्यभिधीयते ॥ ६१ ॥

विभुशब्देन वक्तव्या देशाधिपतयो द्विजा ।
ज्येष्ठोपाध्यायपितृभिरन्यैरपि च तत्समैः ॥ ६२ ॥

वत्स इत्येव वक्तव्यास्त्रैवर्णिककुमारकाः ।
रथी सारथिशब्देन स्वसूत वक्ति नाटके ॥ ६३ ॥

सूत इत्येव वा क्वापि नान्यथा कथनक्रमः ।
राजकीयैर्जनैस्सर्वा महीपप्रियनन्दनाः ॥ ६४ ॥

दारिकेत्येव वक्तव्या राजपूर्वं कुलाधिकाः ।
सर्वत्र हीनसंबुद्धौ हण्ड इत्यभिधीयते ॥ ६५ ॥

सर्वविद्यासु कुशलः सर्वाश्रमपदेश्वरः ।
मुनिः कुलपतिस्सर्वैर्वक्तव्यो नाटकाश्रितः ॥ ६६ ॥

वद्देति विनयाभावे नीचपात्रे प्रयुज्यते ।
विद्याधरी तु कान्तेन सौदामन्यभिधीयते ॥ ६७ ॥

सावज्ञमङ्गीकरणे तद्दूरैरामेति कथ्यते ।
आह्वानं कुर्वतेऽन्योन्यं धूताः नाम्नैव केवलम् ॥ ६८ ॥

आवुत्तो गणिकाकान्तो भगवत्यपि वर्णिनी ।
अत्तेति गणिकामाता गुरुः कापालिकस्स्मृतः ॥ ६९ ॥

जातेति पुत्रवात्सल्यात् मात्रा पुत्रोऽभिधीयते ।
सर्वावज्ञविशेषोत्थकामचाराभिभाषणे ॥ ७० ॥

हमित्येवाभिधातव्य सर्वैरिङ्गितगोपने ।
भर्तृमाताऽङ्गनाभिर्वा चेटीभिर्गणिकाऽथवा ॥ ७१ ॥

वार्तासु सर्वदा काममज्जुकेति निगद्यते ।
आयुष्मन्निति वक्तव्यो रथी सारथिना सदा ॥ ७२ ॥

अभीष्टवस्तुसंसिद्धौ येन केनापि चोदितः ।
प्रथमः कल्प इत्येव प्रवदत्यासनायकः ॥ ७३ ॥

प्रतीहारी जनस्सर्वो विजयीत्यभिधीयते ।
वणिक्प्रधानो यो लोके सस्स्मृत सार्थवाहकः ॥ ७४ ॥

सर्वेश्वर सरसधीः प्रतिबुद्धशास्त्र-
श्रीवामराशिगुरुपादयुगप्रसादम् ।
विद्वन्मुदे नियतभाषितसर्वभावि-
विज्ञानकृद्व्यधित साधु निरुक्तमेतत् ॥ ७५ ॥

इति साहित्यसारे तृतीयः प्रकाशः

# चतुर्थः प्रकाशः

## नाटकसन्धयः

अङ्कस्यान्ते समुत्पत्तिरङ्कस्यार्थो विशेषतः ।
अङ्कावतारः कथितः मर्मनाटककोविदैः ॥ १ ॥

विष्कम्भकस्तु सक्षेपादतीतागतवस्तुनोः ।
सूचको मध्यमकृतश्शुद्धस्सद्भिरुदाहृतः ॥ २ ॥

नीचमध्यमपात्राभ्या कृतस्सङ्कीर्णको भवेत् ।
नैपथ्ये पात्रविहिता सूचिकार्थस्य चूलिका ॥ ३ ॥

## नाट्यस्त्रियः

उदारा चतुरा प्राज्ञा मृद्वी रूपान्विता सती ।
नायिका कथ्यते सद्भिर्नाटके नायकोचिता ॥ ४ ॥

स्वकीयाऽन्या समानेति सा पुनस्त्रिविधा भवेत् ।
स्वकीया विधिवत्नेत्रा सप्राप्तकरपीडना ॥ ५ ॥

मुग्धा मध्या प्रगल्भेति साऽपि त्रेधा निगद्यते ।
मुग्धा स्वल्पवय क्रोधा मृद्वी समुग्धभाषिणी ॥ ६ ॥

अज्ञातसुरतोल्लासा किञ्चिदुद्यन्मनोभवा ।
न कोऽपि भेदो नाट्यादौ सर्वत्रैकविधैव सा ॥ ७ ॥

धीरा मध्या त्वधीरेति मध्यमा त्रिविधा भवेत् ।
धीरा मध्या सललित पश्यति स्मेरया दृशा ॥ ८ ॥

कथाभिस्सोपहासाभिर्दुनोति दयित क्रुधा ।
स्वयं मध्या समुद्भिद्यद्यौवनानन्दशालिनी ॥ ९ ॥

मोहान्तसुरतोल्लासा कोपे किञ्चिद्विकत्थना ।
मध्या धीरेतरा बद्धाक्षरा गद्गदभाषिणी ॥ १० ॥

कृतापराध दयित सखीनां ताडयेत्पुरः ।
धीरा मध्या त्वधीरेति प्रगल्भाऽपि त्रिधा भवेत् ॥ ११ ॥

धीरा प्रगल्भा सक्रोधा सोल्लासेनैव चक्षुषा ।
सापराध प्रिय दृष्ट्वा सा बहिस्सादरा भवेत् ॥ १२ ॥

प्रगल्भा स्वयमुद्भिन्नमन्मथोन्मादमन्थरा ।
सुरतालापलीलायामप्यत्यर्थविचेतना ॥ १३ ॥

विलीयमानेवाभाति दयितालोकने मुदा ।
कोपे मधुरसस्यन्दिवक्रोक्त्या खेदयेत्प्रियम् ॥ १४ ॥

धीरेतरा प्रगल्भा तु कुपिता मदमन्थरम् ।
प्रिय प्रत्यप्रिय वक्ति गम्भीरमधुराक्षरम् ॥ १५ ॥

मध्याप्रगल्भाभेदाना प्रत्येक भरतादिभिः ।
ज्येष्ठाकनिष्ठाभेदेन द्वादशैताः प्रकीर्तिताः ॥ १६ ॥

अन्याधीनतया काव्येष्वन्योढा कन्यका मता ।
नान्योढा कथ्यते क्वापि रससङ्गिकवीश्वरैः ॥ १७ ॥

कुर्यादङ्गानि सवन्ध कन्यका मदनोदया ।
अन्योढाचरित क्वापि जनहासाय विन्यसेत् ॥ १८ ॥

कलासु कुशला धूर्ता सम्मानगणिका स्मृता ।
नात्र तद्विस्तरोऽस्माभिरन्यत्र कृतिरूढितः ॥ १९ ॥

## अष्टविधनायिका

आसामवस्थाः शास्त्रोक्ता भवन्त्यष्टौ मनोहराः ।
उत्कण्ठिता विप्रलब्धा खण्डिता प्रोषितप्रिया ॥ २० ॥

स्वाधीनपतिकाश्लिष्टा वासंसज्जाभिसारिके ।
प्रिये चिरयति व्यक्त कुपितोत्कण्ठिता भवेत् ॥ २१ ॥

विप्रलब्धा समदना सङ्केतच्छलिता वधू ।
व्यक्तव्यलीके दयिते खण्डिता रोषरूषिता ॥ २२ ॥

यस्या देशान्तरगतो भर्ता सा प्रोषितप्रिया ।
स्वदासकल्पदयिता स्वाधीनपतिका भवेत् ॥ २३ ॥

प्रिये निर्वासिते रोषादाश्लिष्टा तापपीडिता ।
अलङ्कृता वसेत्प्रेयान्वाससज्जा प्रियागमे ॥ २४ ॥
कामार्ताभिसरेत्कान्त सारयेद्वाभिसारिका ।

## दूत्यः

दूत्यो दासी सखी कारुर्धात्रेयी प्रातिवेशिका ॥ २५ ॥
लिङ्गिनी भिक्षुकी स्वा च नेतृमित्रगुणान्विता ।
दासी स्वकीया चेटी स्यात्सखो स्वस्य समा वधू ॥ २६ ॥

रजकी कारुरुदिता धात्रेयी मातृसन्निभा ।
प्रतिवेश्मनि तिष्ठन्ती कथ्यते प्रातिवेशिका ॥ २७ ॥

लिङ्गिनी भिक्षुकी प्रोक्ता शिल्पिनी चित्रकारिका ।
स्व पञ्चेत्येवमेवात्र दूतीनामष्टक भवेत् ॥ २८ ॥

## सत्त्वालङ्करणानि

नारीणा सत्त्वसभूता ह्यलङ्करणविंशतिः ।
भावहावौ च हेला च स्त्रीणामङ्गोद्भवास्त्रय ॥ २९ ॥

शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्त रत्याता ह्ययत्नजाः ॥ ३० ॥

लीला विलासो विच्छित्तिः विभ्रमः किलिकिञ्चितम् ।
मोट्टायित कुट्टमित बिम्बोको ललित नतम् ॥ ३१ ॥

एते स्वाभाविका ख्याता दश विंश्चे चाविंशति· ।
रागाविष्ट मनो भावो हावस्तत्सूचनाविधि. ॥ ३२ ॥

स एव हेला सुव्यक्ता शृङ्गाररसपोषक· ।
यौवनोदयसभोगैश्शोभा दहगता द्युति ॥ ३३ ॥

मदनोद्दीपिताकारा सैव कान्तिरिति स्मृतम् ।
प्रतीयमानोऽपरधा दीप्तिं स्यात्कान्तिविस्तरः ॥ ३४ ॥

अनुल्बणत्व माधुर्य परुषेणापि वस्तुना ।
प्रागल्भ्य साध्वसाभाव कामसन्दीपनोचित ॥ ३५ ॥

औदार्यं मुग्धता स्थायि प्रश्रयोन्मिश्रभाषणम् ।
अतिस्थिरगुणक्लिष्टा मनोवृत्तिस्तु धैर्यतः ॥ ३६ ॥

प्रियानुकरण लीला मधुराङ्गविचेष्टितै ।
तत्कालजनितोल्लासो विलासोऽङ्गक्रियादिषु ॥ ३७ ॥

स्वल्पाप्याकाररचना विच्छित्ति· कान्तिपोषकृत् ।
त्वरया विभ्रम स्थाने भूषास्थानविपर्ययः ॥ ३८ ॥

अश्रुक्रोधभयादीना सङ्करः किलिकिञ्चितम् ।
मोट्टायित प्रियालापे तद्भावपरिभावनम् ॥ ३९ ॥

सार्द्रमन्त कुट्टमितं क्रोधः केशग्रहादिषु ।
गर्वादिष्टतमे पुसि बिम्बोकोऽनादरक्रिया ॥ ४० ॥

सुकुमारोऽङ्गविन्यासो मसृणो ललित भवेत् ।
विचित्ररचनाप्राय अङ्गैरेवानतिर्भवेत् ॥ ४१ ॥

## नायकलक्षणम्

स्वभावशुद्धो मेधावी रक्तलोको दृढव्रतः ।
शूर प्रियवदस्त्यागी मधुरो लोकविश्रुतः ॥ ४२ ॥

युवा विद्वत्प्रियो भोगी गीतादौ निपुण प्रभु ।
नाटके नायक. प्रोक्तो नाट्यशास्त्रविचक्षणैः ॥ ४३ ॥

धीरोपपदसबद्धै सभेदैर्लोकविश्रुतै ।
नेता चतुर्धा ललितशान्तोदात्तोद्धतैरिह ॥ ४४ ॥

निश्चिन्तो यौवनोद्धात्मा कलाकुशलमानस ।
समृद्धो धीरर्ललितो विलासी वनिताप्रिय ॥ ४५ ॥

सामान्यगुणभूयिष्ठस्सविशेषपराक्रमः ।
मितभाषी निर्विकारो धीरशान्तो द्विजादिकः ॥ ४६ ॥

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
धीरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥ ४७ ॥

गम्भीरो मत्सरग्रस्तो मायावी कामनिष्ठुरः ।
धीरोद्धतो हितद्वेषी वीरश्चण्डो विकत्थन ॥ ४८ ॥

रसे चतुर्विधो नेता शृङ्गारे नाटकादिषु ।
अनुकूलो दक्षिणश्च शठो धृष्ट इति क्रमात् ॥ ४९ ॥

एकामेवाश्रयेद्यस्तु सोऽनुकूल इति स्मृतः ।
ज्येष्ठायामपि गेहिन्या सस्नेहो दक्षिणो भवेत् ॥ ५० ॥

गूढविप्रियकारी यः शठस्सः कथ्यते बुधैः ।
व्यलीकविक्रमश्लाघी धृष्टो लज्जाविनाशकः ॥ ५१ ॥

पूर्वोक्तास्ते तु चत्वार प्रत्येकोऽर्थदशावशात् ।
काव्यनाटकभेदेषु भवन्त्येव हि षोडश ॥ ५२ ॥

नैव भेदोऽनुकूलस्य स्थिरैकदयितास्थिते· ।
ज्येष्ठमध्यकनिष्ठत्वसपादनविधिक्रमात् ॥ ५३ ॥

अष्टाधिक पुनस्तेऽपि चत्वारिंशद्भवन्ति च ।

## पारुषा गुणाः

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ॥ ५४ ॥

ललितौदार्यमित्यष्टौ सत्त्वजा पौरुषा गुणा ।
दीनेषु करुणा स्पर्धा गुणाढ्येषु पराक्रमे ॥ ५५ ॥

दक्षता शास्त्रविषये शोभेति विदुषा मता ।
गतिर्गभीरा दृष्टिश्च सगर्वा सस्मित वच ॥ ५६ ॥

विलासस्सत्त्वसपन्न पुरुषस्य निगद्यते ।
मनोविकारो माधुर्यं सक्षोभे सुमहत्यपि ॥ ५७ ॥

विकारहेतावुत्पन्ने गम्भीर्यं निर्विकारता ।
व्यवसायादचलन विघ्नैरत्यर्थमाकुलात् ॥ ५८ ॥

नेतुरुत्तमभावस्य स्थैर्यमाहुर्मनीषिण ।
अधिक्षेपादिदोषाणा कृतानामहितैर्जनै· ॥ ५९ ॥

सर्वस्वप्राणनाशेऽपि तेजस्स्यादसहिष्णुता ।
शृङ्गाराकारचेष्टावन्मृदुत्व ललित विदु. ॥ ६० ॥

औदार्यं प्राणदानादि परस्योज्जीवनेच्छया ।

## तत्सहायाः

तत्सहायः पीठमर्दस्तथा विटविदूषकौ ॥ ६१ ॥

किञ्चिदूनगुणस्तस्मात् पताकानायको महान् ।
सर्वविद्यासु निपुण पीठमर्दोऽभिधीयते ॥ ६२ ॥

एकविद्याविशेषज्ञो विटस्सललिताकृति ।
हाससपादनपटुर्विरूपो हि विदूषक ॥ ६३ ॥

लुब्धो धीरोद्धतस्तब्धो नीतिशून्योऽतिगर्वित ।
परनिन्दानिरतधीः पापकृत्प्रतिनायक ॥ ६४ ॥

## नायकादिलक्षणम्

मन्त्री स्व वा सखा तस्य स्वय वा वित्तिचिन्तने ।
सचिवायत्तससिद्धिर्ललितो नायको भवेत् ॥ ६५ ॥

उभयायत्तसिद्धि स्याद्धीरशान्तो महामतिः ।
मन्त्रिष्वारोपितभर. प्रत्यक्ष मनसा स्वयम् ॥ ६६ ॥

स्वतन्त्र. कुरुते कार्यं धीरोदात्तस्तु नायक ।
नेता धीरोद्धतश्शश्वत् स्वाधीनाशेषकार्यकः ॥ ६७ ॥

धर्मेषु देवभूदेवगुरुवर्णिपुरोहिता ।
दण्डनीतिविधौ तस्य नेतुरेकमहत्तरः ॥ ६८ ॥

सुहृत्कुमारको दण्डकोशस्सामन्तसैनिकाः ।
अन्तःपुरे वर्षवरकिराता मूकवामना ॥ ६९ ॥

म्लेच्छाभीरकिराताद्या विस्रम्भस्यैकभूमयः ।
एव विधो भवेन्नेता नायकस्सुपरिच्छदः ॥ ७० ॥

## पाठ्यभाषा

राजविप्रविटामात्यसुभटाधीतयोषिताम् ।
नटनर्तकधूर्ताना सस्कृत पाठ्यमुच्यते ॥ ७१ ॥

देवदानवगन्धर्वसिद्धनागेशरक्षसाम् ।
कान्चुकीयप्रतीहारिलिङ्गिनीवणिजामपि ॥ ७२ ॥

विद्याधरवर्षवरमहादेवीविलासिनाम् ।
योगिना योगिनीना च सस्कृत मप्रयोजयेत् ॥ ७३ ॥

छद्मलिङ्गप्रविष्टाना निगूढाना तपस्विनाम् ।
शाक्यचक्रचराणा च सस्कृत न प्रयोजयेत् ॥ ७४ ॥

अधमाना कुविद्यानामज्ञानामल्पचेतसाम् ।
क्षुत्पीडाविकलानां च सस्कृत न प्रयोजयेत् ॥ ७५ ॥

स्त्रीणा तु प्राकृत प्राय शूरसेन्यधमेषु च ।
पिशाचात्यन्तनीचादौ पैशाच मागध तथा ॥ ७६ ॥

शकारभाषा चण्डाना प्रकृत्या जडतेजसाम् ।
यद्देश्य नीचपात्र च तद्देश्य तस्य भाषितम् ॥ ७७ ॥

आभीरभाषा वक्तव्या सर्वेषा घोषवर्तिनाम् ।
कार्यतश्चोत्तमादीना कार्यो भाषाविपर्ययः ॥ ७८ ॥

शृङ्गाररसमूर्छाया गीते च ऋतुवर्णने ।
सर्वासामपि नारीणा सस्कृत सप्रयोजयेत् ॥ ७९ ॥

भगवन्त परैर्वाच्या विद्वद्देवर्षिलिङ्गिन ।
विप्रामात्याग्रजाचार्यनटसूत्रभृतो मिथ ॥ ८० ॥

विदूषकेण सर्वत्र नायिका परिचारिका ।
राजमाता च धात्री च भवतीति निगद्यते ॥ ८१ ॥

राज्ञा वयस्य इत्येव नामपूर्वं विदूषक ।
विदूषकेण राजा च निर्नाम तद्वदेव हि ॥ ८२ ॥

भावोऽनुगेन सूत्री च मारिषेत्येव सोऽपि च ।
आमन्त्रणीया ह्यन्योन्यमेवमन्येऽपि युक्तित ॥ ८३ ॥

अङ्कान्तसस्थितै पात्रैरुत्तराङ्कार्थसूचनम् ।
कर्तव्यमिति तत्पूर्वैः सविमर्शं निगद्यते ॥ ८४ ॥

अङ्कद्वयान्तरालस्थो नीचपात्रप्रयोजित· ।
प्रकृत्युत्पन्नभाषावानिति ज्ञेय प्रवेशक ॥ ८५ ॥

मलयजमुनिपुङ्गवेन तुङ्ग-
स्फुरितयशोविसरेण नाटकादेः ।
रचितमिदमुदीक्ष्य लक्ष्यरम्य-
स्थितमधुराननता व्रजन्तु सन्त· ॥ ८६ ॥

इति साहित्यसारे चतुर्थ प्रकाश· ।

---

# पञ्चमः प्रकाशः



## काकुलक्षणम्

साकाङ्क्षा च निराकाङ्क्षा चेति काकुर्द्विधा भवेत् ।
अनिर्युक्ताक्षरा वाणी साकाङ्क्षेति निगद्यते ॥ १ ॥

निर्युक्ताक्षरसंयुक्ता निराकाङ्क्षा भवेदिह ।
अल्पैरव्यक्तमुक्ता तु दुर्विज्ञेयतयापि च ॥ २ ॥

रसस्सस्मेरमस्माभिस्सम्यगेव विचार्यते ।

## रसस्वादुता

विभावैरनुभावैश्चसात्त्विकैर्व्यभिचारिभिः ॥ ॥ ३ ॥

स्वादुत्व नीयमानोऽसौ स्थायिभावो रसो भवेत् ।
निरन्तररसव्यापी सदैव रसपोषकृत् ॥ ४ ॥

सोऽाप हेतुस्तदुत्पत्तेर्विभाव इति कथ्यते ।
विभाव कोऽपि शारीरो भावससूचनात्मवान् ॥ ५ ॥

अनुभाव इति प्राज्ञैराज्ञातो भरतादिभिः ।
सुखदु खादिभिर्भावैरनुकारिण्यवस्थितै· ॥ ६ ॥

निरन्तरसमुद्भेदैः भावस्तद्भावभावनम् ।
यद्यप्याकुलयन्त्युच्चैरनुभावादभिन्नताम् ॥ ७ ॥

पृथगेव भवन्त्येते भावास्सर्वत्र सात्त्विका ।

## सात्त्विकाः

स्तम्भप्रलयरोमाञ्चस्वेदवैवर्ण्यवेपथूः ॥ ८ ॥

अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ।
स्तम्भस्तु निष्क्रियाङ्गत्व प्रलयो नष्टसज्ञता ॥ ९ ॥

रोमाञ्चो रोमनिर्भेदस्स्वेदस्सीकरनिर्गम. ।
वैवर्ण्य वर्णनाशस्स्याद्वेपथुर्गात्रकम्पनम् ॥ १० ॥

अश्रु नेत्राम्बु वैस्वर्यं विस्वरत्वमुदाहृतम् ।
नाटकादिष्विमे दोषा नाट्यतत्त्वविचक्षणै ॥ ११ ॥

सत्त्वादेव समुत्पत्तेस्सात्त्विका इति सज्ञिताः ।

## व्यभिचारिणः

सविशेषाभिमुख्येन स्थायिनोऽन्तश्चरन्ति ये ॥ १२ ॥

सम्यगुन्मग्ननिर्मग्नास्ते मता व्यभिचारिण ।
निर्वेदग्लानिचिन्तेर्ष्यामदमोहमतिश्रमाः ॥ १३ ॥

शङ्काधृतिस्मृतिव्याधिवितर्कोन्मादद‍ीनता ।
आवेगालसतात्रासव्रीडामर्षोग्रतासया ॥ १४ ॥

जडता मरण स्वप्नविषादौत्सुक्यविभ्रमा ।
अपस्मारावहित्थाऽन्ध्यप्रबोधप्रीतयस्तथा ॥ १५ ॥

त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः ।

## निर्वेदः

सर्वलोकप्रसिद्धोऽसौ निर्वेद स्वेदमाननम् ॥ १६ ॥
तत्त्वज्ञानवदीर्ष्यादेस्तदुत्पत्तिर्हि दृश्यते ।

## ग्लानिः

ग्लानिश्शरीरवैवश्य कथ्यते सर्वकोविदै ॥ १७ ॥
उत्पाद्यते तत्सर्वत्र क्षुत्पिपासारतिश्रमैः ।

भवेयुस्तत्र वैवर्ण्यकम्पानुत्साहविक्रियाः ॥ १८ ॥

### चिन्ता

सर्वैस्सर्वत्र निर्दिष्टा चिन्ता ध्यानैकतानता ।
इष्टनाशादनिष्टस्य सपदो वा तदुद्भवः ॥ १९ ॥
तत्र स्युश्चित्तवैक्लव्य तापनिश्वासनिर्गमा ।

### ईर्ष्या

परोत्कर्षाक्षमासूया कल्पनीया मनीषिभि. ॥ २० ॥
गर्वदौर्जन्यमन्युभ्यस्सातु सञ्जायते नृणाम् ।
दोषोक्त्यवज्ञाभ्रुकुटीनर्जनानि भवन्ति हि ॥ २१ ॥

### मदः

हर्षोत्कर्षो मद. प्रोक्तस्सर्वेषामिह देहिनाम् ।
अभीष्टप्राप्तिसभोगपानादिभ्यस्तदुद्भव ॥ २२ ॥
स्खलदङ्गवचोमुद्रागतयस्सभवन्ति हि ।

### मोहः

मोहो विचित्तताज्ञेया देहवैवर्ण्यकारिणी ॥ २३ ॥
तस्यापि सभवो भीतिदुःखावेशानुचिन्तनैः ।
तत्राज्ञानभ्रमावातघूर्णनादर्शनादय. ॥ २४ ॥

### मतिः

मतिस्तत्त्वगता बुद्धिरदुष्टा शिष्टसम्मता ।
सापि निष्पद्यते लोके शास्त्रादेस्तत्त्वसपदा ॥ २५ ॥
तत्राभान्ति गुणोत्कर्षसदसच्चिन्तनादय ।

### श्रमः

स्वेदस्सर्वाङ्गविश्रान्तः श्रम इत्यभिधीयते ॥ २६ ॥
अस्मिन्न विस्युरङ्गेषु स्वेदसम्मर्दनादयः ।

### शङ्का

अनर्थादौ समुत्पन्ने शङ्का स्यात्प्रतिभादयः ॥ २७ ॥

परावितयतस्स्वस्य दुर्नयाद्वोपजायते ।
भवेयुरस्विन्नातङ्ककम्पवैवर्ण्यवेदना· ॥ २८ ॥

### धृतिः

अशेषभोगभोक्तृत्व धृतिरित्यभिपीयते ।
शक्तिज्ञानादिसन्तोषात्सापि सजायते परम् ॥ २९ ॥
अस्यामभिहितानन्दसम्प्राप्तिरधिका भवेत् ।

### स्मृतिः

कथ्यतेऽपि बुधैस्सर्वैः स्मृतिस्ससमरणादय· ॥ ३० ॥
सदृशज्ञानचिन्तादिसपद्भयस्सापि जायते ।
एतस्यामनुभावा स्युर्भ्रूसमुन्नमनादय. ॥ ३१ ॥

### व्याधिः

व्याधयस्सन्निपाताद्यास्तेषामन्यत्र विस्तरः ।

### वितर्कः

वितर्कस्तु विचारः स्यादतिसन्दिग्धवस्तुनि ॥ ३२ ॥
विकल्पशास्त्रप्रज्ञादेरुत्पत्तिस्तस्य दृश्यते ।
तत्राङ्गुलीविचलनभ्रूशिरोवक्रतादयः ॥ ३३ ॥

### उन्मादः

अनिरूपितकारित्वमुन्मादस्सप्रकीर्तित· ।
ज्ञानादन्यस्य तात्पर्यशोकादिभ्यस्सजायते ॥ ३४ ॥
तस्मिन्नस्थानरूढित्व( रुदित ? ) गीतहाससितादयः ।

### दीनता (ग्रन्थपात:)

## आवेग.

आवेगस्सहसा जातस्सम्भ्रमो हि निगद्यते ॥ ३५ ॥

राजानिलाहितस्निग्धवृष्टिवह्निभ्य एव च ।
उत्पातादथवा नाशादुत्पत्तिस्तस्य दृश्यते ॥ ३६ ॥

शस्त्रनागाभियोगा हि दृश्यन्ते राजविद्रवे ।
पातादौ पांसुसंघाते दुःखसन्ततिमित्रजे ॥ ३७ ॥

वह्निजे धूमसंपातस्त्रस्ततोत्पातजे भवेत् ।
करिजे स्युर्भयस्तम्भकम्पापसरणादयः ॥ ३८ ॥

## आलस्यम्

सर्वाङ्गसादिलोकानामालस्यं जिह्मता मता ।
उद्भूतिः श्रमगर्भादेस्तस्य सन्दृश्यते जनैः ॥ ३९ ॥

तस्यानुभाववैवर्ण्यस्तोकभाषणजृम्भिकाः ।

## त्रासः

तत्त्वज्ञैर्मनसः कम्पस्त्रास इत्यभिधीयते ॥ ४० ॥

गजमेघाशनिस्थूणसंघट्टादुपजायते ।
भवन्ति पवनोत्कम्पसम्भ्रमालोकनादयः ॥ ४१ ॥

## व्रीडा

अङ्गनामहिमाहेतुर्लज्जा व्रीलेति कथ्यते ।
अगम्यागमनादिभ्यस्सा परं जायते भुवि ॥ ४२ ॥

अङ्गावरणवैवर्ण्यसाचीकृतमुखादयः ।

## अमर्षः

अमर्षोऽभिहितस्सद्भिर्दोषेष्वभिनिवेशनम् ॥ ४३ ॥

अधिक्षेपप्रमादाद्वा रोषाद्वा जायते च स. ।
अत्र स्वेदाम्रिचलनताडनग्रहणादय ॥ ४४ ॥

### उग्रता

चण्डतैवहि सर्वेषामुग्रता विदुषा मता ।
दुष्टापवाददौर्मुख्यचौर्यात्सञ्जायते परम् ॥ ४५ ॥

अत्र स्वेदशिर·कम्पतर्जनीताडनादय ।

### स्मयः

स्मयस्सर्वजनोन्मादी गर्व एवेह कथ्यते ॥ ४६ ॥

ऐश्वर्यबललावण्यरूपेभ्यस्तत्समुद्भव· ।
अत्रावज्ञाविलासाङ्गविभाषालट्टहादयः ॥ ४७ ॥

### जडता

प्रतिपत्तेरभावेन स्तब्धता जडता मता ।
सा समुत्पद्यते लोके दयितालोकनादिभि. ॥ ४८ ॥

अस्यामपि भवेत्स्वस्त्वनिमेषनिरीक्षणम् ।

### मरणम्

प्रसिद्धमपि वक्तव्यं मरणं भूतपञ्चता ॥ ४९ ॥

विरहव्याधिदुष्कर्मविधिभ्यस्तस्य सभवः ।
जनताशोकविष्मृतस्तम्भनिश्चेष्टतादयः ॥ ५० ॥

### स्वप्नम्

संमीलन हि चित्तस्य निद्रेति परिगीयते ।
दु.खातिरेकवैकल्यमनःखेदादिभिर्भवेत् ॥ ५१ ॥

तत्र स्युरङ्गविक्षेपश्वासायासक्रियादयः ।

## विषादः

विषादः कथ्यतेऽस्माभिस्सत्त्वस्यैवेह सक्षयः ॥ ५२ ॥

प्रारब्धवस्तुभङ्गादेरुत्पत्तिस्तस्य दृश्यते ।
निश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ॥ ५३ ॥

## औत्सुक्यम्

कालाक्षमत्वमौत्सुक्यं कथ्यते कविपुङ्गवैः ।
हृद्यवस्तु सुहृद्योगरत्यास्थाभिस्तदुद्भवः ॥ ५४ ॥

तत्रोच्छ्वासत्वरात्रासहृत्तापस्वेदविभ्रमाः ।

## विभ्रमः

विभ्रमः कथ्यते श्लाघ्यैरात्मश्लाघाक्रमोदयः ॥ ५५ ॥

हृद्यकालकलाक्रान्तकलापैरुपजायते ।
तत्रानुभावा रोमाञ्चस्वेदमन्दस्मितादयः ॥ ५६ ॥

## अपस्मारः

भूतप्रेतपिशाचानामपस्मारोऽधिरोहणम् ।
मन्त्रतन्त्रक्रियालापैस्सोऽपि सम्पद्यते नृणाम् ॥ ५७ ॥

भ्रूपादकम्पस्वेदादौ लालाफेनोद्भ्रमादयः ।

## अवहित्थम्

काले मनस्संवरणमवहित्थं विदुर्बुधाः ॥ ५८ ॥

लज्जादिविक्रियाहेतुस्तत्समुत्पत्तिकर्मणः ।

तत्र साचीनवक्त्रत्वमितजापविहस्तता ॥ ५९ ॥

## चापलम्

अनवस्थाक्रमाकारमान्ध्य चापलमेव हि ।
कथ्यते च तदुत्पत्तौ हेतुर्मर्कटचित्तता ॥ ६० ॥

स तु सर्वत्र सन्तोष· परिमाणादिसभव ।
तत्र जृम्भाशिर कम्पनयनोन्मीलनादय ॥ ६१ ॥

तत्रानुभावा. पारुष्यस्वच्छन्दावगुणादय ।

## प्रबोधः

निद्राभावः प्रबोध स्यादसौ विख्यात एव हि ॥ ६२ ॥

## हर्षः

सर्वाङ्गीण प्रमोदस्य व्यापारो हर्ष उच्यते ।
अभिप्रेतोत्सवादिभ्यस्तस्य जन्मोपलभ्यते ॥ ६३ ॥

तस्मिन्नेवोपजायन्ते सस्वेदा गद्गदा गिर. ।

## स्थायी

न तिरस्क्रियते योऽन्यैर्भावैर्विपरिवर्तिभि· ॥ ६४ ॥

अन्येषामात्मनाकुर्वन् स स्थायी कथ्यते बुधै ।
भावके वर्तमानत्वादास्वाद्यत्वाच्च भूयश ॥ ६५ ॥

रसस्स एव निर्दिष्टो रसिकैर्भरतादिभिः ।
वृत्तेऽनुकार्ये चेत्स्वादु. कस्येदानी रसाग्रह ॥ ६६ ॥

काव्य न तत्प्रीतिकर वर्तमानसुखावहम् ।
स्वदते कथमस्थायि निर्वेदादिरनादिक ॥ ६७ ॥

तद्रूपभावविभवस्तेनाष्टौ स्थायिनस्स्मृताः ।
रत्युत्साहो जुगुप्सा च शोक(क्रोध?)मोहौ भयस्मयौ ॥ ६८ ॥

शोकश्च कश्चिदप्यन्यो नेहास्माभिस्स कथ्यते ।
एतेषां काव्यबन्धेन स्वशब्दैरनिवेदितः ॥ ६९ ॥

स बन्धः कल्पनीयो हि भाव्यभावकसञ्ज्ञितः ।
शश्वत्सहृदयग्रन्थे परन्निरूक्(वृं)तचेतस· ॥ ७० ॥

काव्यार्थभावनास्वादो नर्तकस्यापि वर्तताम् ।
स्वादुकाव्यार्थसभेदादात्मन्यानन्दसभवः ॥ ७१ ॥

विकारविस्तरक्षोभविक्षोभैस्स चतुर्विध· ।
शृङ्गारवीरबीभत्सरौद्रेषु मनस· क्रमात् ॥ ७२ ॥

हास्याद्भुतभयोत्कर्षकरुणानन्द एव च ।

## रतिः

हृद्यदेशकलावेषकालभाषाविभूषितः ॥ ७३ ॥

यूनोरन्योन्यससक्तचेतसोस्सदृशोदय· ।
निर्भरो य प्रमोदः स्यात् स एव हि रतिस्स्मृत ॥ ७४ ॥

सैव लावण्यपीयूषभूषितैरङ्गचेष्टितै· ।
प्रकृष्यमाणश्शृङ्गारस्सरसैरिह कथ्यते ॥ ७५ ॥

भावा ह्येकोनपञ्चाशदेतस्य परिपोषका ।
आलस्यमरणोग्रत्वजुगुप्सास्तु विरोधिन· ॥ ७६ ॥

## संभोगलक्षणम्

असभवोऽभियोगश्च सभोगश्चेति स त्रिधा ।
असंभवोऽनुराग· स्याद्यूनोरासक्तचित्तयोः ॥ ७७ ॥

सङ्गमाभावसुभगः पराधीनतया मिथ· ।

### दशावस्थाः

भवन्त्यत्र दशावस्था निर्दिष्टाश्शास्त्रकोविदैः ॥ ७८ ॥

सस्मृत्युद्वेगाभिलाषप्रलापोन्मादसज्वराः ।
चिन्तागुणकथाजाड्यमरणानि यथाक्रमम् ॥ ७९ ॥

### तल्लक्षणानि

जगतस्तन्मयत्वेन दर्शनं तु स्मृतिर्मता ।
हृद्यवस्तुषु विद्वेषो ह्युद्वेगः कथ्यते बुधैः ॥ ८० ॥

अभिलाषः स्पृहा प्रोक्ता काम्ये सर्वाङ्गसुन्दरे ।
असंबद्धकथालापः प्रलाप इति कथ्यते ॥ ८१ ॥

उन्मादश्चेतसो भ्रान्तिरनवस्थानिबन्धना ।
सज्वरस्तु समस्ताङ्गव्यापी तापोदयो महान् ॥ ८२ ॥

चिन्ता सदैव तल्लग्ना बुद्धिरन्यानपेक्षिणी ।
तदलाभे तत्प्रशंसा गुणाख्यानं निगद्यते ॥ ८३ ॥

चिन्तास्तिमितकायत्वं जडता विदुषां मता ।
सुप्रसिद्धं तु मरणं सर्वेषां कीर्तिशेषिता ॥ ८४ ॥

### मानप्रवासौ

वियोगो विप्रलम्भः स्याद्रतिविस्रब्धयोर्द्वयोः ।
मानप्रवासभेदेन स पुनर्द्विविधो भवेत् ॥ ८५ ॥

स्त्रीणामीर्ष्याकृतो मानः कोपोऽन्यासङ्गिनि प्रिये ।
श्रुते वा कल्पिते बुध्या दृष्टे वा तत्समुद्भवः ॥ ८६ ॥

श्रुतिस्सखीमुखात्तत्र कर्तव्या नाटकादिषु ।
अनुमाच्छलनिद्रान्ध्यगोत्रस्खलनलक्षणा ॥ ८७ ॥

सर्वत्र दर्शनोत्पन्नस्साक्षादिन्द्रियगोचरः ।
तत्र मात्रे सुमहति षडुपायविधिस्स्मृत  ॥ ८८ ॥

सामभेदौ प्रदान च नत्युपेक्षारसान्तरम् ।
तत्र प्रियवचस्साम भेदस्तत्सख्युपार्जनम् ॥ ८९ ॥

दान भूषणदानादि पादयो पतन नतिः ।
उपेक्षा समये निन्दा तदीयजनससदि ॥ ९० ॥

रभसत्रासहर्षादिः कोपस्पर्शो रसान्तरम् ।
अन्य प्रणयमानः स्यादच्यापारसमुद्भवः ॥ ९१ ॥

प्रवासो भिन्नदेशत्व कार्यसभ्रमशापजः ।
अनुभावा भवन्त्यत्र द्वयोरपि विशेषत. ॥ ९२ ॥

निश्वासनिर्गमत्रासकार्श्यलम्बालकादयः ।
सोऽपि भावी भव जात इति त्रेधैव निश्चितः ॥ ९३ ॥

## अनुकूलः

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि ससम्भोगो मुदान्वितः ॥ ९४ ॥

## चेष्टाः

चेष्टास्तत्र प्रवर्तन्ते लीला द्वादश योषिताम् ।
विभावितः प्रतापाद्यैर्दीनाद्यैरनुभावितः ॥ ९५ ॥

अनुभावितः कार्श्याद्यैरुत्साहो वीरता व्रजेत् ।
विभाविताविष्टगन्धवमनश्लेष्मकीटकै. ॥ ९६ ॥

रुधिरान्त्रवसामांसैस्त्यर्थमनुभावितः ।
वरप्रवृत्तिविद्वेषवैरिवैकृतसंभवः ॥ ९७ ॥

भ्रुकुटीरचनाकम्पस्वेदाद्यैरनुभावितः ।
भावितो मदगर्वाद्यै क्रोधो रौद्रो भवेत्स्वयम् ॥ ९८ ॥

विकृतात्कृत्रिमाद् द्वेषैरात्मनो वा परस्य वा ।
विभावितो भवेद्धासो हास्यस्मितविशेषत ॥ ९९ ॥

स्मितमुत्फुल्लनयन सस्मित सद्विजप्रभम् ।
स्वनयुक्त विहसितमुपन्यासस्तु कम्पकृत ॥ १०० ॥

अपहासस्सनीराक्षो ह्यतिहासोऽङ्गपातकः ।
श्रेष्ठमध्यकनिष्ठाना द्वौद्वौ स्यातां यथाक्रमम् ॥ १०१ ॥

निद्रालस्यश्रमग्लानिमूर्छाद्या व्यभिचारिणः ।
अतिलोकपदार्थै स्याद्विस्मयात्मा रसोऽद्भुतः ॥ १०२ ॥

अस्यानुभावा नेत्राम्बुवेपथुस्वेदगद्गदा. ।
हर्षावेगधृतिप्राया भवन्ति व्यभिचारिणः ॥ १०३ ॥

विकृतस्वमसत्त्वादेर्भयभावो भयानकः ।
प्रभूतस्वेदवैवर्ण्यशोषवेपथुलक्षण· ॥ १०४ ॥

त्रासस्त्रमसमोहदैन्यानि व्यभिचारिणः ।
इष्टनाशादनिष्टादेश्शोकात्मा करुणो रसः ॥ १०५ ॥

निश्वासोच्छ्वासदेहार्तिस्तम्भप्ररुपितादयः ।
तत्रापस्मारदैन्यान्ध्यसभ्रमा व्यभिचारिणः ॥ १०६ ॥

## रसस्य वर्णाः

श्यामो वर्णस्तु शृङ्गारे विष्णुस्तत्राधिदैवतम् ।
गौरो नीरस्तु विज्ञेयो महेन्द्रस्तस्य देवता ॥ १०७ ॥

नीलवर्णो हि बीभत्सो महाकालोऽधिदैवतम् ।
रौद्रः कपोतवर्णस्स्यात् रुद्रस्तस्याधिदैवतम् ॥ १०८ ॥

सितो हास्य स्मृतस्सद्भिरीश प्रथम(मथ)दैवतम् ।
पीतवर्णोऽद्भुत· प्रोक्तस्तस्याधीश पितामह ॥ १०९ ॥

भयानक कृष्णरूपस्स हि कालाधिदैवत. ।
हरिद्वर्णस्तु करुण· यमस्तस्याधिदैवतम् ॥ ११० ॥

अनेनैव क्रमेणासौ ज्ञातव्यो रसविस्तरः ।

## रसस्य वृत्तिः

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ॥ १११ ॥

रसे रौद्रे सबीभत्सो वृत्तिस्सर्वत्र भारती ।
यत्र बीजस्य सहारो यत्नार्थः पर्यवस्यति ॥ ११२ ॥

सर्वेषा यत्र निष्कामस्सोऽङ्क इत्यवगम्यताम् ।

## धर्मादयः

धर्मः स्वधर्मानुष्ठान धर्माणा या विधेयता ॥ ११३ ॥

प्रजाना पालनेनैव षड्भागग्रहण धनम् ।
समानकुलधर्माढ्यगृहिण्या गृहमेधिनः ॥ ११४ ॥

कृतकृत्यस्य सभोग काम इत्यभिधीयते ।
निश्शेषस्सारससारविचारचतुरात्मनः ॥ ११५ ॥

मोक्षः स्याद् ज्ञानसपत्त्या परमानन्दसगतिः ।
समिश्राः केवला वा स्युरेतत्सर्वत्र नाटके ॥ ११६ ॥

समासौ सर्वसन्तोषो ह्युदर्क. प्रीतिरुच्यते ।

**नाटकेऽङ्कसंख्या**

उक्तलक्षणनिष्पत्तिप्रसक्त्या सम्यगर्चितम् ॥ ११७ ॥

पञ्चाङ्कनाटक हीन दशाङ्क प्राहुरुत्तमम् ।

सर्वेश्वरो रसविशेषविचारमेव-

मापादयन्नमृतसोदरवाक्प्रवाहः ।

आनन्दहेतुरधुना भवि(भुवि)कस्य न स्यात्

साहित्यसारसरसीरुहराजहंस. ॥

इति साहित्यसारे पञ्चमः प्रकाश

# षष्ठः प्रकाशः



## नाटकलक्षणम्

कीर्तिकामो महोत्साहो धीरोदात्तः प्रतापवान् ।
अभिगम्यगुणैर्युक्तस्त्रय्यस्त्राता महीपतिः ॥ १ ॥

कर्तव्यो नाटके नेता देवो राजर्षिरेव वा ।
प्रख्यातमेव कर्तव्य वृत्तमप्याधिकारिकम् ॥ २ ॥

अत्यर्थानुचित यत् स्यान्नायकस्येतरस्य वा ।
तत्परित्यज्यता सम्यगन्यथा वा प्रकल्पयेत् ॥ ३ ॥

साद्यन्त वस्तु निश्चित्य पञ्चधा सविभज्य च ।
खण्डशस्सन्धिसज्ञांस्तान् भागान् कुर्याद्विचक्षणः ॥ ४ ॥

चतुष्षष्ट्यङ्गसस्थान तदशैः कल्पयेत्पुनः ।
पताकावृत्तमन्यून विन्यसेत्प्रकरीमपि ॥ ५ ॥

विष्कम्भक वा प्रथममङ्क वा कार्ययोगतः ।
प्रत्यक्षनेतृचरितः सबिन्दुर्व्याप्तिभूषणः ॥ ६ ॥

अङ्को नानाप्रकारार्थस्सार्थ एव हि शोभनः ।
सविभावानुभावोऽन्यस्थायिनस्सम्यगङ्गिनः ॥ ७ ॥

गृहीतवृत्तै. कर्तव्य प्रौढत्वं व्यभिचारिभिः ।
न नयेद्वस्तुविच्छेदमत्यन्तरसपोषणात् ॥ ८ ॥

रस च न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ।
शृङ्गारोऽप्यथवा वीरः कर्तव्यो वाङ्गिलक्षणः ॥ ९ ॥

रसाना पुनरन्येषामङ्गत्व पतिपाद्यताम् ।
भोजनस्नानसुरतवधसरोधसङ्करान् ॥ १० ॥

विवाह दूरगमन देशराज्याद्युपप्लवान् ।
गन्धमाल्याम्बरादीनि प्रत्यक्षाणि न निर्दिशेत् ॥ ११ ॥

द्वित्राणामेव पात्राणामेकदैवागमो भवेत् ।
सर्वेषा निर्गमे जाते सभवेन्नेतृनिर्गमः ॥ १२ ॥

## प्रकरणलक्षणम्

ततः प्रकरणे वस्तु वक्तव्य स्वमनीषया ।
लोकवार्ता स्वय हृद्य व्यवहारक्रमोचितम् ॥ १३ ॥

सचिवद्विजवैश्यानामेक एव हि नायकः ।
धीरप्रशान्तस्सोपायो धर्मकामार्थतत्पर ॥ १४ ॥

द्विविधा नायिका तत्र कुलस्त्री गणिका तथा ।
क्वचिदेकैव कुलजा वेश्या क्वापि द्वय क्वचित् ॥ १५ ॥

अभ्यन्तरस्था कुलजा वेश्या बाह्यैव सर्वदा ।
शुद्ध शुद्धेतरं तद्वत् सकीर्णमिति तत्त्रिधा ॥ १६ ॥

शुद्ध कुलस्त्रियायुक्तमितरद्गणिकाश्रितम् ।
आभ्या सङ्कीर्णक धूर्तविटचेटीजनाश्रितम् ॥ १७ ॥

शेष नाटकवत्सन्धिप्रवेशकरसादिकम् ।

## नाटिकालक्षणम्

अत्रैव वर्तते सापि नाटिका नाटकोद्भवा ॥ १८ ॥

तत्र प्रकरणाद्वस्तु नाटकाच्चापि किञ्चन ।
नायको ललित. ख्यात' काममोगैकनिष्ठितः ॥ १९ ॥

स्त्रीप्राया चतुरङ्का च शृङ्गारो रसलक्षणः ।
देवी तत्र कुलज्येष्ठा प्रगल्भा नृपवंशजा ॥ २० ॥

तदधीनतया कृच्छ्रादन्यस्या नेतृसङ्गम ।
वृत्तिस्तु कैशिकी तत्र पूर्वोक्ताङ्गसमन्विता ॥ २१ ॥

सन्धिसन्ध्यङ्गरचना यथालाभं विधीयते ।

## सट्टकम्

प्रायेण नाटिकाप्राय चतुर्यवनिकान्तरम् ॥ २२ ॥

विष्कम्भकादिभिस्सर्वैर्विहीन पञ्चसूचकैः ।
सट्टक स्त्रीजनाकीर्णमेकभाषामय भवेत् ॥ २३ ॥

## भाणः

धूर्तानां चरितं भाण स्यात्तवर्तनसश्रयम् ।
तत्र पात्रं विटस्त्वेको निपुणश्शास्त्रकोविदः ॥ २४ ॥

उक्तिप्रत्युक्तिविधयः सम्यगाकाशभाषितैः ।
विधेयाः कल्पनीयानि लास्याङ्गानि दशापि च ॥ २५ ॥

शृङ्गारवीरौ ससूच्यौ रसौ सौभाग्यसंस्तवैः ।
मुखनिर्वहणे सन्धी तदङ्गैरपि भूषितः ॥ २६ ॥

एकाङ्कः स्थापनायुक्तो भारत्या स तु संस्कृतः ।

## ईहामृगः

ईहामृगोऽपि विज्ञेयश्चतुरङ्कस्त्रिसन्धिकः ॥ २७ ॥

दिव्यावनियतावत्र नायकप्रतिनायकौ ।
धीरोद्धतौ स्यातकृतौ यदृच्छासङ्गतौ मिथः ॥ २८ ॥

वधूं दिव्यामनिच्छन्ती हठादाहर्तुमिच्छतः ।
शृङ्गारलेशमधुरस्सम्यगारब्धसङ्गरः ॥ २९ ॥

छलेन येन केनापि तत्र युद्धं निवारयेत् ।
सत्कर्णोद्धृत्तवृत्तिभ्या कर्तव्यश्च कवीश्वरैः ॥ ३० ॥

## वीथी

वीथी सकैशिकीवृत्तिरेकाङ्का स्थापनावती ।
एकपात्रकृतासङ्गमुखनिर्वहणाश्रिता ॥ ३१ ॥

दैवतापसविख्यातकथासबन्धशालिनी ।
रसस्सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ॥ ३२ ॥

हृद्यपद्यावलिप्राया तदङ्गानि त्रयोदश ।
छलप्रपञ्चत्रिगतवाक्केलीगण्डनालिकाः ॥ ३३ ॥

उत्खात्यकावलगिते व्याहाराधिबले तथा ।
असत्प्रलापमृदवोस्तथापस्पन्दित पुनः ॥ ३४ ॥

अशोभनैश्शोभनाभैरर्थैरुक्तिश्छल भवेत् ।
मिथ्यास्तुतिर्मिथोजाता प्रपञ्च इति कथ्यते ॥ ३५ ॥

श्रुतिसाम्यादनेकार्थयोजन त्रिगत मतम् ।
वाक्केली मधुरा वाणी नर्मणा गर्भित भवेत् ॥ ३६ ॥

गण्डमप्रस्तुत वाक्य प्रस्तुतस्याविरोधतः ।
प्रहेलिकैव गूढार्था नालिकेति निगद्यते ॥ ३७ ॥

गूढार्थपदसम्बन्धा नानाप्रश्नोत्तरावलि ।
अन्तर्लापादिका सद्भिरुत्खात्यमिति कथ्यते ॥ ३८ ॥

विहाय प्रस्तुत कार्य यदन्यत्साध्यते नरै ।
अत्रावलगित प्राहुस्तदेव कविपुङ्गवा ॥ ३९ ॥

हासाय प्रस्तुत वाक्य व्याहारोऽर्थान्तराश्रितम् ।
अन्योन्यवाक्याधिकयोः स्पर्धयाधिबल भवेत् ॥ ४० ॥

असत्प्रलाप· प्रायेण सबन्धरहित वच ।
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवो हि तत् ॥ ४१ ॥

वचसामन्यथाव्याख्या ह्यपस्पन्दितमुच्यते ।

## व्यायोगः

विख्यातवृत्तो व्यायोगो विख्यातोद्धतनायक ॥ ४२ ॥

हीनो गर्भावमर्शाभ्या दीप्ता हास्यादयो रसा ।
वृत्तिरारभटी प्रायो बहुक्रूरजनावृतः ॥ ४३ ॥

एकाहश्चरितैकाङ्को ह्यस्त्रीकरणसङ्गर ।

## समवकारः

कुर्यात्समवकारोऽपि सम्यगामुखलक्षणम् ॥ ४४ ॥

ख्याता देवासुरकथा वस्तुत्वेन निरूप्यताम् ।
कैशिक्या रहितास्तत्र वृत्तय· परिकीर्तिताः ॥ ४५ ॥

सुरासुरास्तु नेतारो निर्विमर्शाश्च सन्धय ।
अत्र द्वादश नेतॄणां फल कुर्यात्पृथक्पृथक् ॥ ४६ ॥

वीरप्रायस्सतव्यङ्गस्त्रिश्शृङ्गारस्त्रिविद्रवः ।
कपटत्रितयोपेतश्चित्रोक्त्या परिपूरितः ॥ ४७ ॥

विसन्धिरङ्क प्रथमः कार्यो द्वादशनाडिकः ।
नाडिकाना च यः पश्चात्र प्रत्येक स्याच्चतुष्टयी ॥ ४८ ॥

नाडिकाघटिकायुग्ममिति सर्वजनश्रुतिः ।
वस्तुस्वभावा दैवारिकृताः स्यु कपटास्त्रयः ॥ ४९ ॥

देशोपरोधसग्रामवह्निभ्यो विद्रवास्त्रय· ।
धर्मार्थकामैः शृङ्गारो नात्र बिन्दुप्रवेशकौ ॥ ५० ॥

वीथ्यङ्गानि यथाकाम सोपहासानि कल्पयेत् ।

## उत्सृष्टिकाङ्कम्

उत्सृष्टिकेति विख्यात वस्तु बुद्ध्या प्रपञ्चयेत् ॥ ५१ ॥

करुणाख्यो रसः स्थायी नेतार. पूर्वकल्पिताः ।
सन्धिसन्ध्यङ्गवृत्त्यङ्गैः भाणवत्परिकल्पयेत् ॥ ५२ ॥

स्त्रीणामालापसल्लापविलापादिभिराकुलः ।
वाचा विधेयस्सग्रामो वचसैव जयाजयौ ॥ ५३ ॥

## प्रहसनम्

तत· प्रहसनं प्रायः कल्पयेद्बुद्धिवैभवैः ।
शुद्ध सविकृतं तद्वत् सङ्कीर्णमिति तत्त्रिधा ॥ ५४ ॥

द्विजपाषण्डदुर्वर्गिचेटचेटीविटावृतम् ।
वेषभाषाविभूषाद्यै. शुद्ध हासकृत भवेत् ॥ ५५ ॥

कामुकैरतिवाचाटैश्चण्डदुष्पण्डितादिभिः ।
जरत्कञ्चुकिनिर्गन्धतापसैर्विकृत स्मृतम् ॥ ५६ ॥

धूर्तकापालिकामात्यचोरसंबाहकादिभि. ।
वीथ्यङ्गैरन्तराकीर्णं सङ्कीर्णमिति कथ्यते ॥ ५७ ॥

रसस्तु भूयसा कार्यो हास्यो नानाविधाश्रय. ।
मुखनिर्वहणे सन्धी वृत्तिरेकैव भारती ॥ ५८ ॥

एकोऽङ्क कल्पनीय स्यान् नानाहासमनोहर ।

## डिमः

डिमो विशेषविख्यातवस्तुविस्तारशोभित ॥ ५९ ॥

वृत्तय कैशिकीहीना रसा· शृङ्गारवर्जिता ।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगा ॥ ६० ॥

भूतप्रेतपिशाचाद्या षोडशात्यन्तमुद्धता. ।
मायेन्द्रजालसङ्ग्रामनिर्घातोत्पातविभ्रमान् ॥ ६१ ॥

चन्द्रसूर्योपरागाश्च सम्यगेव विनिर्दिशेत् ।
रौद्रो रसश्च कर्तव्यश्चत्वारोऽङ्कास्सविस्तरा· ॥ ६२ ॥

दीर्घवृत्तिविचित्रार्थो निर्विमर्शो डिमो भवेत् ।
सन्धिसन्ध्यङ्गवृत्त्यङ्गवृत्तिनायकवस्तुभि ॥ ६३ ॥

भिद्यमानाङ्कसङ्केतभेदा स्युर्नाटके दश ।

सदृढरचितबन्धस्साधु सर्वेश्वरेण
प्रथितभरतशास्त्रप्राप्तभूषाविशेष ।
मृदुतरपदशय्याशोभितश्शश्वदुच्चै
सरसमनसि भूयादेष साहित्यसार ॥ ६४ ॥

इति श्रीमन्मलयजमहापण्डितसर्वेश्वराचार्यविरचिते

साहित्यसारे षष्ठ प्रकाश

अस्य साहित्यसारस्य सङ्ख्या सर्वेशकल्पिता ।
भवेदष्टाधिकैवात्र षट्शती सुमनोहरा ॥
सर्वेशकविः कर्ता साहित्यसाररचनायाः ।
श्रीवामराशिदेवो यस्य गुरुर्मुनिवराधीशः ॥ (आदर्शान्तरे)

यद्बोधादिदं भाति यद्बोधाद्विनिवर्तते ।
नमस्तस्मै परानन्दवपुषे परमात्मने ॥

शुभमस्तु

Printed at the Tirumalai Tirupati Devasthanams Press, Tirupati and
published by the Director Sri Venkatesvara Oriental Institute

SRI VENKATESVARA ORIENTAL INSTITUTE, TIRUPATI

## Price list of Publications

*General Editor* —PROF P. V RAMANUJASWAMI, M A, *Director*

*Sri Venkatesvara Oriental Series* — Rs A

1 **Sri Venkatesvara Kavya Kalapa,** (Sanskrit) Ed by Sri D T Tatacharya, M O L — 4 0

2 **History of Tirupati,** Volume II (English) by Dr S Krishnaswami Aiyangar, M A, Ph D (*Out of Stock*)

3 **A Glossary of Indian Philosophical Terms,** (Sanskrit-English) by Sri C V Sankara Rao, M A — 1 8

4 **Psychology,** (Telugu) by Dr K C Varadachari, M A, Ph D (*Out of Stock*)

5 **Isavasyopanishad Bhashya,** of Venkatanatha, (Sanskrit-English) Ed & Translated by Dr K C Varadachari, M A, Ph D & Sri D T Tatacharya, M O L (*Out of Stock*)

6 **Samurtarchanadhikarana (Atri Samhita),** (Sanskrit) Ed by Mr Raghunatha Chakravarthi Bhattacharya & Sri M Ramakrishna Kavi, M A — 6 0

7 **Suvarnasaptati Sastra.** (Sanskrit) Reconstructed from the Chinese & Ed by Sri N Aiyaswami Sastri — 3 0

8 **Kenopanishad Bhashya,** by Rangaramanuja (Sanskrit-English) Ed & Translated by Dr K C Varadachari, M A, Ph D & Sri D T Tatacharya, M O L — 1 0

9 **Tirukkural-Kamattuppal,** with the commentaries of Kalingar and Parimelazhagar... 

| | | Rs. | A |
|---|---|---|---|
| 10 | **Sri Venkatesvara Vachanamulu,** (Telugu) Edited by Sri V Prabhakara Sastri .. . | 1 | 8 |
| 11. | **Sringarasankirtanamulu,** Vol IV of Tallapaka Annamacharyulu (Telugu) Ed. by Sri V Prabhakara Sastri . | 2 | 0 |
| 12 | **Kasyapa-Jnanakanda (Kasyapa Samhita),** (Sanskrit) Ed by Sri R Parthasarthi Bhattachar | 3 | 0 |
| 13 | **Andhra-Kuvalayanandamu** ,(Telugu) by Ubhavabhasha Pravina Sri K Subrahmanya Sastri | 3 | 12 |
| 14 | **Tirukkural-Porutpal,** with the commentaries of Kalingai and Paripperumal (Tamil) Ed by Sri T P Palaniappa Pillai, B O L | 4 | 0 |
| 15 | **Kathopanishad Bhashya,** of Rangaramanuja (Sanskrit English) Ed and Translated by Dr K C. Varadachari, M A , Ph D and Sri D T Tatacharya, M O L | 3 | 12 |
| 16 | **Sri Venkatesvara Laghu Kritulu,** (Telugu) Edited by Sri V Prabhakara Sastri | 1 | 8 |
| 17 | **Annamacharya Charitramu,** (Telugu) Edited by Sri V Prabhakara Sastri | 2 | 8 |
| 18 | **Tiruvengada Sthalapuranam.** (Tamil) with prose supplement Ed by Sri T P Palaniappa Pillai, B O L | 1 | 8 |
| 19 | **Alankarasangraha,** of Amritanandayogi, (Sanskrit) Edited by Sri P Balakrishnamurti, M A | 3 | 4 |
| 20 | **Subhadra Kalyanamu,** (Telugu) by Tallapaka Timmakka, Ed by Sri V Prabhakara Sastri . | 0 | 12 |
| 20a | **Sankaravilasam,** (Tamil) Ed by Sri T P Palaniappa Pillai, B O L | 3 | 4 |
| 21 | **Janasrayi,** (Sanskrit) Ed by Sri M Ramakrishna Kavi, M A | 1 | 0 |
| 22 | **Adhyatmasankirtanalu,** Vol V of Tallapaka Annamacharyulu (Telugu) Ed by Sri V Prabhakara Sastri .. | 3 | 4 |

| | Rs | A |
|---|---|---|
| **Tiruvengada Ula,** (Tamil) Ed by Sri T P Palaniappa Pillai, B O L | 1 | 8 |
| **Adhyatmasankirtanalu,** Vol VI of Tallapaka Annamacharyulu (Telugu) Ed by Sri A V Srinivasachari | 2 | 0 |
| **Prasnopanishad Bhashya,** of Rangaramanuja (Sanskrit-English) Ed and Translated by Dr K C Varadachari, M A, Ph D and Sri D T Tatacharya, M O L | 2 | 12 |
| **Sri Venkatesvara Stuti Ratnamala,** (Telugu) Ed by Sri V Prabhakara Sastri | 1 | 2 |
| **Dharmasangraha,** (Sanskrit) Ed by Prof P V Ramanujaswami, M A | 2 | 0 |
| **Nipatavyayopasargavritti,** (Sanskrit) Ed by Vidya Pravina Sri A Someswarasarma, P O L ... | 2 | 0 |
| **Adhyatmasankirtanalu,** Vol VII of Tallapaka Annamacharyulu (Telugu) Ed by Sri R Anantakrishna Sarma & Sri A V Srinivasachari | 3 | 0 |
| **Bharata Kosa,** (Sanskrit) Ed by Sri M Ramakrishna Kavi, M A | 22 | 0 |
| **Adhyatmasankirtanalu,** Vol VIII of Tallapaka Annamacharyulu (Tel ) Ed by Sri R Anantakrishna Sarma & A V Srinivasachari | 3 | 0 |
| **Raghuvamsa,** (Cantos 1 & 2), Translated into Tamil and Ed by Sri D T Tatacharya, M O L | | |
| **Adhyatmasankirtanalu,** Vol IX of Tallapaka Annamacharyulu (Tel ) Ed by Sri R Anantakrishna Sarma | 3 | 0 |
| **Sri Venkatesvara Stuti Ratnamala,** (Tel ) Vol II Ed by Sri K Ramakrishnaiya, M A | 2 | 0 |
| **Adhyatmasankirtanalu,** Vol X of Tallapaka Annamacharyulu (Tel ) Ed by Sri R Ananthakrishna Sarma .. .. | ... | |